"दिल्ली - संस्कृत - एकाडेम्याः आर्थिकसाहाय्येन प्रकाशितम्"

# काव्यकैरवम्




रचयिता

## रवीन्द्रकुमारः पण्डा

# काव्यकैरवम्

## (सप्तमः काव्यसंग्रहः)

रवीन्द्रकुमारः पण्डा

"दिल्ली - संस्कृत - एकाडेम्याः आर्थिकसाहाय्येन प्रकाशितम्"



"दिल्ली - संस्कृत - एकाडेम्याः आर्थिकसाहाय्येन प्रकाशितम्"

पुस्तकनाम : काव्यकैरवम् (सप्तमः काव्यसंग्रहः)

रचयिता : रवीन्द्रकुमारः पण्डा

उपाचार्यः

संस्कृतपालीप्राकृतविभागे,

म.स.विश्वविद्यालयः, बडौदा-२.

गृहसङ्केतः : सी-६२, अक्षरधाम सोसायटी

अक्षरचौक, बडौदा - ३९० ०२०.

फोन- (०२६५) २३२५५४८

प्रकाशिका : डॉ. श्वेता प्रजापतिः

द्वारा अर्वाचीनसंस्कृतसाहित्यपरिषद्

सी-६२, अक्षरधाम सोसायटी

अक्षरचौक, बडौदा - ३९० ०२०.

मोबाइल :- 98984 72669



प्रथमसंस्करणम् : २००७

मूल्यम् - रू १५०/-

प्रति - ३००

मुद्रक - नेट ऐन्टरप्राइज

मोबाईल : 94262 77690

PROF. HAREKRISHNA SATAPATHY
VICE-CHANCELLOR

RASHTRIYA SANSKRIT VIDYAPEETHA
(DEEMED UNIVERSITY)
TIRUPATI - 517 507 (A.P.)

# शुभाशंसा

तदेव रम्यं रुचिरं नवं नवं
तदेव साक्षान्मनसो महोत्सवम्

इति श्रीमद्भागवतोक्तदिशा काव्यन्तु नित्यनूतनं सत्यसनातनं सहृदयहृदयाह्लादकं किमप्यनिर्वचनीयं वस्तु, यस्य श्रवणमात्रेणापूर्वः कश्चनान्तरश्चमत्कारो वितन्यते । कविरवीन्द्रकुमारपण्डामहोदयस्य काव्यपाठानन्तरमिदमेव सारस्वततत्त्वं वारंवारं मानसकन्दरमान्दोलयति। वर्णनानिपुणः कविः महान्, तस्य सृष्टिस्तु नवरसरुचिरा महत्तरा। कविरवीन्द्रेण विरचितस्य ''काव्यकैरवा''भिधेयस्य काव्यसंग्रहस्याध्ययनानन्तरमियमप्युक्तिः दृढीभूता।

सहृदयवर्य्येण मदीयानुजप्रतिमेन रवीन्द्रेण भगवत्याः असीमया अनुकम्पया बहूनि बहुविधानि च संस्कृतकाव्यानि विरचितानि । तानि सर्वाण्येव सर्वत्र समादृतानि। तेषु सर्वेषु काव्यकदम्बकेषु किमपि स्वातन्त्र्यं मया संलक्षितम्। सरलता, भावप्रवणता, सहृदयसंवेदनशीलता चासां तिसृणां धाराणामलौकिकः त्रिवेणीसंगम एव रवीन्द्रकाव्यसंग्रहोऽयमवश्यं पाठकेषु सर्वथा सर्वदा चादृतो भविता इत्यत्र नास्ति कश्चन संशयः।

भगवतः जगन्नाथस्य कृपया कवीन्द्ररवीन्द्रस्य सारस्वतं जीवनमधिकतया मङ्गलमयं भवतु, तस्य कवितागङ्गा अपरिमितसहृदयहृदयानि प्रक्षालयतु, तस्य च गन्तव्यमार्गः नियमितार्कमरीचितापः कुसुमसुरभितः भूयादीति मे कामना।

हरेकृष्ण शतपथी

दिनाङ्कः - १६-१-२००७

- हरेकृष्णशतपथी

# प्राक्कथनम्

अधुना मनसि मम प्रमोदस्य काचिदपूर्वा सुधास्यन्दिनी धारा । नूतनकाव्यसंग्रहोऽयं प्रभोः परमेश्वरस्यासीमकरुणया प्रकाश्यते । पथि नैके विघ्ना निदाघस्य मेघा इव स्वयमागत्य पलायिताः। काव्यकर्म सहृदयानां रसिकाणां प्रेरणाभिः पूर्ववत् प्रचलति। चलत्ययं रथो जगन्नाथस्य सहायेन येन केन प्रकारेण। तेनैव सहायेन समस्तां तां समस्यामुल्लङ्घ्य नूतनं किञ्चिदत्र निर्मातुं प्रयतते कविः स्वकल्पनाशक्त्या। असुन्दरं भवति सुन्दरं तया कल्पनया। तिक्तं मधुरमिव प्रतीयते तया कल्पनया। अतः सा कल्पना काव्यरूपधारिणी क्षणे क्षणे नवतां विधत्ते। सा कल्पनासुन्दरी काले काले कमनीया या सहृदयानां रसिकानां मनःसु सञ्चारयति रसबिन्दून्। आनन्दस्य नवधाराम्। मम सा कल्पनासुन्दरी काव्यरूपलावण्येन सुशोभिता सती दण्डायमानाधुना भवतां पुरतः। सानन्दं तां पश्यन्तु भवन्तः। स्पृशन्तु भवन्तस्तां काव्यसुन्दरीम्।

दिल्ली-संस्कृत एकाडेम्याः आर्थिकसाहाय्येन काव्यसंग्रहोऽयं प्रकाशितः। अतः समादरपूर्वकं दिल्ली-संस्कृत एकाडेम्या अधिकारिणां कृते कृतज्ञतां विज्ञापयामि।

तिरुपतिस्थस्य राष्ट्रियसंस्कृतविद्यापीठस्य मानितविश्वविद्यालयस्य कुलपतीनां कविकुलरत्नविरुदभाजां काव्यनिर्माण-शास्त्र- परिशीलनपरायणानामुदारचेतसां सहृदयानां प्रो. हरेकृष्ण शतपथीमहोदयानां कृते हार्दं कार्तज्ञ्यं ज्ञापयामि, यै 'शुभाशंसा' लेखनद्वारा ममेयं कृतिः संस्कृतजगतः पुरो निधाय प्रतिष्ठापिता तथा च संग्रहस्य रसवत्ता समेधिता।

अन्ते श्वेतां प्रकाशनार्थं धन्यवादमर्पयामि।

काव्यसंग्रहोऽयं कालक्रोडे क्रीडतु चिरकालमिति विश्वासेन साकं विरमामि।

सरस्वतीसाधनैकव्रतो

रवीन्द्रः

# सूचीपत्रम्

१

# वाग्वधूटी

अरलसरलरीत्या रागसिक्ता शुभाङ्गी
मदयति मम मुग्धां चेतनां सा कृशाङ्गी।
अनवरतमनन्तां स्नेहराशिं दधन्ती
रसयति नवरासस्निग्धसञ्चारसूत्रम् ॥१॥

सरलहृदयभित्त्यां चित्ररूपेण सन्ती
सृजति मधुरभावस्नेहसंसारतन्त्रम् ।
हरति हृदयतो या दुःखदारिद्र्यकष्टं
विहरति मम चित्ते चेतनां सा स्पृशन्ती ॥२॥

विषमसमयचिन्ता नास्ति यस्याः स्वभावे
नवरसरुचिरा या राजते ज्ञानलोके ।
अखिलजगति यस्या गुणगीतिः प्रसिद्धा
भवति न च कदा सा रोगिणी भोगमुग्धा ॥३॥

न च कठिनकरालैर्बन्धनैश्च प्रबद्धा
कुचकलशविनम्रा मोदमाना सुभद्रा ।
रचयति नवरासं नित्यमेवात्र कण्ठे
वसति वसनमुक्ता मोहरिक्ता शुभा सा ॥४॥

कवयति मम कण्ठे कण्ठलग्ना सुखैर्या
प्रतिपदरचनायां सञ्चरन्ती क्षणेन ।
निरसविषयतथ्ये मादकत्वं निवेश्य
चलति चपललीला भावभूमिं स्पृशन्ती ।।५ ।।

हसति कमलनेत्रा चाह्वयन्तीव चित्तम्
लसति रसमयी सा दीप्तहेमाङ्गवर्णा ।
विरचयति वसन्ते शान्तलीलाः सुरम्याः
प्रतिपदमिह चित्ते चञ्चला सा वधूटी ।।६ ।।

कवयति नवकाव्यं भावमुग्धो वसन्तो
रचयति रसचित्रं रागरक्तो दिगन्तः ।
मनसि मनसि दुःखी तां विनाद्य चकोरो
रहसि निजविलापं वेदयन्नेव धीरः ।।७ ।।

सकलमिह विभाति प्रेमपूर्णं प्रगाढं
विकसति वनमल्ली कानने मे कुमारी ।
नवरसमधुरा सा भाति सौन्दर्यलक्ष्मीः
विदलति मम कष्टं कामिनी वाग्वधूटी ।।८।।

रवीन्द्रकुमारपण्डाकविना विरचितं
'वाग्वधूटी' काव्यं समाप्तम्

******

२

# प्रभो समस्तं तव देव सर्जनम्

यदत्र सर्वं मधुरं मनोहरं
सुकोमलं रूपमयञ्च सुन्दरम् ।
सुशोभनं भोगविलाससाधनं
प्रभो समस्तं तव देव सर्जनम् ॥१॥

जले स्थले पल्वले भूतले नले
फले द्रुमे बीजविलासवैभवे ।
यदस्ति पुष्पस्य सुरूपसम्पदि
प्रभो समस्तं तव देव सर्जनम् ॥२॥

यदस्ति नित्यं मधुरं सुधोपमम्
अहर्निशं मोदयतीह मानसम् ।
यदस्ति रूपे रमणीयसम्पदि
प्रभो समस्तं तव देव सर्जनम् ॥३॥

यदत्र सञ्चालयतीह मानसम्
यदत्र विलापयतीह सारसम् ।
यदस्ति भावे विभवे विभावने
प्रभो समस्तं तव देव सर्जनम् ॥४॥

यदस्ति दुःखद्रुमपत्रविस्तरे
यदस्ति सौख्यस्य नवे रसान्तरे ।
यदस्ति रूपस्य प्रभाववैभवे
प्रभो समस्तं तव देव सर्जनम् ॥५॥

यदस्ति शून्ये गगने वने घने
विमोहके प्रेमपरागचन्दने ।
यदस्ति भूमावथ वा समीरणे
प्रभो समस्तं तव देव सर्जनम् ॥६॥

यदस्ति धूलावपि शून्यमण्डले
यदस्ति वह्निप्रलयप्रसारणे ।
यदस्ति गन्धस्य सुगन्धबन्धने
प्रभो समस्तं तव देव सर्जनम् ॥७॥

धने यदस्तीह नवे प्रसाधने
यदस्ति मौने नवबीजरोपणे ।
यदस्ति कान्तारसुदीर्घदर्शने
प्रभो समस्तं तव देव सर्जनम् ॥८॥

रसे यदस्तीह नवे रसायने
यदस्ति पीयूषरसस्य कानने ।
यदस्ति कान्ताकमनीयचुम्बने
प्रभो समस्तं तव देव सर्जनम् ॥९॥

यदस्ति बालस्य विलासवैभवे
यदस्ति कालस्य करालसायके ।
यदस्ति सङ्गीतलयस्य गौरवे
प्रभो समस्तं तव देव सर्जनम् ॥१०॥

यदस्ति सूर्यस्य सुतीक्ष्णरश्मिषु
यदस्ति चन्द्रस्य च शीतरश्मिषु ।
यदस्ति वातस्य वितानसैकते
प्रभो समस्तं तव देव सर्जनम् ॥११॥

यदस्ति चण्डस्य प्रचण्डताण्डवे
यदस्ति भण्डस्य नवीनमण्डने ।
यदस्ति तुण्डस्य विशेषभोजने
प्रभो समस्तं तव देव सर्जनम् ॥१२॥

यदस्ति कामस्य कठोरकार्मुके
यदस्ति रामस्य चरित्रचञ्चुके ।
यदस्ति नाम्नि मधुरे रसामृते
प्रभो समस्तं तव देव सर्जनम् ॥१३॥

यदस्ति भूम्याः सुखदं विभूषणम्
यदस्ति वात्रैव रणं विभीषणम् ।
यदत्र दुःखं मरणं निदारुणम्
तदेव सर्वं तव देव सर्जनम् ॥१४॥

यदस्ति दुःखोपशमस्य कारणम्
चराचरे मोहनमत्तवारणम् ।
यदस्ति रागस्य विशेषसाधनम्
तदेव सर्वं तव देव सर्जनम् ॥१५॥

यदस्ति शून्यं गगनं घनावृतम्
यदस्ति पुच्छं शिखिनश्च चित्रितम् ।
यदस्ति सारं जगतो विचित्रितम्
प्रभो समस्तं तव देव सर्जनम् ॥१६॥

यदस्ति विज्ञस्य विचारदर्शनम्
यदस्ति मूर्खस्य विमूढचिन्तनम् ।
यदस्थिरं दुष्टवदेव यौवनम्
तदेव सर्वं तव देव सर्जनम् ॥१७॥

यदस्ति दीपस्य प्रभाप्रदीपकम्
प्रभाकरस्यैव विभाप्रभावकम् ।
विभावरी - भूषणभाव - मण्डनम्
तदेव सर्वं तव देव सर्जनम् ॥१८॥

यदस्ति पुंस्कोकिलगायने वने
धराशरीरेऽस्ति यदत्र गोपने ।
क्षणे क्षणे यन्नवरूपमण्डितम्
प्रभो समस्तं तव देव सर्जनम् ॥१९॥

यदस्ति भीमस्य बले पराक्रमे
यदस्ति संसारविवर्तसंक्रमे ।
यदस्ति जञ्जालजले जलार्णवे
तदेव सर्वं तव देव सर्जनम् ॥२०॥

यदस्ति भेकस्य कठोररोदने
यदस्ति मूकस्य च सृष्टिदर्शने ।
यदस्ति कीटस्य कृशे कलेवरे
प्रभो समस्तं तव देव सर्जनम् ॥२१॥

यदस्ति पात्रं जलधारणे रतम्
यदस्ति पत्रं कुसुमैर्विभूषितम् ।
यदस्ति गर्तं गहनं भयङ्करम्
प्रभो समस्तं तव देव सर्जनम् ॥२२॥

यथा यथा मां दिशसि प्रतिक्षणम्
तथा तथाहं हि करोमि गायनम् ।
त्वमेव कर्त्ता त्वमसीह कारणम्
प्रभो समस्तं तव देव सर्जनम् ॥२३॥

अनन्तसन्तापजले त्वमेव मे
विनाशकालेऽपि सखा सहायकः ।
कृपां विना ते नहि चान्यसाधनम्
प्रभो समस्तं तव देव सर्जनम् ॥२४॥

यदस्ति शब्दे रसभावसाधकम्
यदस्ति गन्धे मधुरं प्रमोदकम् ।
यदस्ति रम्ये कविकाव्यकल्पने
तदेव सर्वं तव देव सर्जनम् ॥२५॥

यदस्ति शास्त्रं नवनेत्रसदृशम्
यदस्ति शस्त्रं समरे सहायकम् ।
यदस्ति वस्त्रं वसनं निगद्यते
तदेव सर्वं तव देव सर्जनम् ॥२६॥

यदस्ति वित्तं सुखशान्तिदायकम्
यदस्ति तन्त्रं मम दुःखतारकम् ।
यदस्ति यन्त्रं समरे सहायकम्
तदेव सर्वं तव देव सर्जनम् ॥२७॥

त्वमेव नाशस्य निदाघयन्त्रणा
त्वमेव हासस्य विलासवासना ।
त्वमेव कान्ताकमनीयकल्पना
त्वमेव संसारसमुद्रभावना ॥२८॥

त्वमेव रासस्य महोदधिः स्वयं
त्वमेव वासस्य महाभूमण्डलम् ।
त्वमेव बीजस्य महामहीरुहः
करोमि तस्मात्तव पादवन्दनम् ॥२९॥

न यामि काशीं न च बद्रिकाश्रमं
करोमि मात्रं तव नामकीर्तनम् ।
यदा यदा मे हृदये दयानिधे
स्वतः समायाति च भावचन्दनम् ॥३०॥

न वेशभूषा न च कस्य भूषणं
न केशसज्जा न च कस्य बन्धनम् ।
न भौतिकं वा नयनप्रसाधनं
करोति चित्तेऽत्र कदापि नर्तनम् ॥३१॥

दरिद्रगेहे गहना च यन्त्रणा
तथापि मित्रैः सह मे कुमन्त्रणा ।
त्वमेव सर्वा मम चित्तसान्त्वना
न याति दूरं कथमेव यातना ॥३२॥

घनान्धकारे तव पादपङ्कजं
स्मरामि च त्वां नवमार्गहेतवे ।
हे दुःखहारिन् स्मरणं तवैव मे
मनःसु सञ्चारयतीह सौरभम् ॥३३॥

दयावतार प्रहर व्यथां मम
कथां कथं त्वं न करोषि चिन्तनम् ।
विनाशय प्रेमरसस्य धारया
समस्तदुःखं मम चित्तजं धव ॥३४॥

प्रचण्डसूर्यस्य त्वमेव सौम्यता
महान्धकारस्य त्वमेव बन्धनम् ।
त्वमेव गेहे गहनः प्रभञ्जन-
स्त्वमेव मूकस्य प्रशान्तभाषणम् ॥३५॥

त्वमेव सिन्धुः लहरीसमन्वित-
स्त्वमेव बन्धो मम प्रियपर्वतः ।
त्वमेव पोतो भवनीरसङ्कटे
त्वमेव सर्वं जगदीश सुन्दर ॥३६॥

न वास्ति मन्त्रो न च तन्त्रसाधना
न यन्त्रविद्यासु विशेषकौशलम् ।
न योगविद्यासु कृतः परिश्रमो
न मन्दिरे वा जपयोगयोजना ॥३७॥

न दानपुण्ये रमते मतिर्मम
कथं करोमि प्रबलो हि विभ्रमः ।
भ्रमस्य भूमिः सहधर्मिणीव मे
कदा विमुक्तिर्वद हे रसेश्वर ॥३८॥

त्वमेव चिन्तानलनग्ननिःस्वनम्
त्वमेव चैतन्यवनस्य कम्पनम् ।
त्वमेव मूकस्य प्रभो सुभाषणम्
करोमि तस्मात्तव पादचिन्तनम् ॥३९॥

त्वमेव साक्षाद् गहनं महावनम्
महान्धकारस्य प्रशक्तसाधनम् ।
त्वमेव रूपस्य मनोहरच्छविः
त्वमेव कालप्रलयस्य वै पविः ॥४०॥

अहं न भक्तस्तव भावसंयुतो
न वाऽनुरक्तस्तव राससागरे ।
विलोक्य भक्तान्मम मानसे भयं
कथं तरामि प्रबलं महार्णवम् ॥४१॥

दिशन्ति नाना विबुधा विचारणाः
सर्वस्य मूले तव भावचेतना ।
त्वया विना मन्दनिराशभावना
विनाशशीला मयि केवलं प्रभो ॥४२॥

त्वमेव मेघः पतितोऽत्र चातक-
स्त्वमेव शून्यस्य प्रशान्तभावुकः ।
त्वमेव काव्यस्य कलाकलापको
दरिद्रदुःखस्य सदा विमोचकः ॥४३॥

त्वमेव चिन्ताहरणाय सुन्दर-
स्त्वमेव दुःखाग्निहरश्च कन्दरम् ।
त्वमेव भक्तेर्मम शून्यमन्दिरम्
त्वमेव कालस्य करालकन्दरः ॥४४॥

यदस्ति वह्नेर्दहनं दयानिधे
यदस्ति नीरस्य प्रवाहयोजनम् ।
जले स्थले या नवरूपलालिमा
प्रभो समस्तं तव देव सर्जनम् ॥४५॥

यदस्ति वेषस्य विलाससंपुटे
यदस्ति कायाकमनीयतावटे ।
यदस्ति हस्ते निकटे ममैव वा
प्रभो समस्तं तव देव सर्जनम् ॥४६॥

यदस्ति शून्यं मधुरं सुखाकरं
यदस्ति तत्त्वं मम सुन्दरावनौ ।
यदस्ति सत्यं किल सूक्ष्मदर्शने
प्रभो समस्तं तव देव सर्जनम् ॥४७॥

त्वमेव देहस्य महान् प्रदाहक-
स्त्वमेव मोहस्य महाविनाशकः ।
त्वमेव पिण्डस्य च चण्डताण्डवो
महान्धकारे पतितोऽद्य पाण्डवः ॥४८॥

त्वमेव रङ्गस्य निःसङ्गनायक-
स्त्वमेव गीतस्य निःशङ्कगायकः ।
त्वमेव वाद्यस्य निःशब्दवादक-
स्त्वमेव खाद्यस्य निःशङ्कभोजकः ॥४९॥

अखण्डदर्पस्य कठोरकार्मुक-
स्त्वमेव नित्यो मधुरो विनायकः ।
महासमुद्रस्य महान् विभावक-
स्त्वमेव सत्यस्य सदा प्रचारकः ॥५०॥

प्रगाढगूढस्य च गोपनीयता
त्वयि समस्ता निहिता निरङ्कुश ।
त्वमेव कार्यं त्वमसीह कारणं
कदात्र कर्त्ता करणं कदाचन ॥५१॥

मनस्तु मे मोहवशेन बन्धुरं
न नेत्रमार्गे चलतीह सुन्दरम् ।
असुन्दरं सुन्दरमेव भाति मां
प्रभो समस्तं तव देव सर्जनम् ॥५२॥

त्वमेव कालस्य कलाप्रहेलिका
त्वमेव बालस्य कलापमालिका ।
अनन्तनृत्यस्य निःशब्दनाटिका
त्वमेव लोलस्य विलापवाटिका ॥५३॥

त्वमेव दीनस्य विभो महानिधि-
स्त्वमेव मीनस्य विशालवारिधिः ।
स्त्वमेव हीनस्य सखे मरीचिका
त्वमेव जीर्णस्य च मण्डले सखा ॥५४॥

त्वमेव चित्तस्य विचित्रपिञ्जरं
त्वमेव कीटस्य चलत् कलेवरम् ।
त्वमेव जीवस्य विलोलकौतुकं
प्रभो समस्तं तव देव सर्जनम् ॥५५॥

न कोऽपि जानाति परात्परेश्वर
त्वदीयसृष्टेश्च रहस्यकारणम् ।
यदत्र विश्वं बहुवस्तुपूरितं
प्रभो समस्तं तव देव सर्जनम् ॥५६॥

तवैव सृष्टिर्महती मनोहरा
तवैव लीलाकलिता सुविपुला ।
तवैव सत्ता महती विचित्रता
प्रभो न जानामि ममास्ति मूर्खता ॥५७॥

धनी क्व राजेव विराजते विभो
क्व वा दरिद्रो म्रियते प्रतिक्षणम् ।
यदत्र वैषम्यमिहास्ति सुन्दर
प्रभो समस्तं तव देव सर्जनम् ॥५८॥

कदा त्वमेव प्रणये विराजसे
कदा महादुःखकरालकानने ।
न कोऽपि विश्वे तव रूपभावुकः
स्वयं त्वमेव प्रलयस्य नायकः ॥५९॥

त्वमेव सत्यस्य निःसीमवालुका
त्वमेव मायाजगतो निहारिका ।
महासमुद्रस्य जलाकुलध्वनि-
स्तवैव लीला न च कस्य गोचरा ॥६०॥

तवैव लीलागगने मनो मम
विहङ्गरूपेण भ्रमत्यहर्निशम् ।
दिने दिने दैन्यमिहैव मे मनः
करोति काष्ठादधिकं जडात्मकम् ॥६१॥

त्वमेव नाशस्य च भीमपावक-
स्त्वमेव हासस्य बली बलाहकः ।
त्वमेव सूक्ष्मे महति प्रभोश्च वै
स्वयं समग्रस्य विलासकन्दुकः ॥६२॥

त्वमेव काष्ठे त्वमसीह वै तृणे
त्वमेव पाषाणतलस्य रेणुषु ।
त्वमेव वृक्षेऽपि च पुष्पसौरभे
त्वमेव काकस्य विराजसे मुखे ॥६३॥

करे न पुष्पं न फलं न चन्दनं
सदैव देहे दहनं विभीषणम् ।
दयां विना ते न हि मानसं स्थिरं
कथं करोमीह पवित्रवन्दनम् ॥६४॥

त्वमेव सञ्चालयसीह चञ्चलम्
चलस्य वै त्वञ्च समस्तसम्बलम् ।
क्षणं त्वमेव त्वमसि विचक्षणः
अनन्तकालस्य करोषि खेलनम् ॥६५॥

न याति रात्रिस्तव निर्देशं विना
न वा चरन्ति गगने महाघनाः ।
घनावृतं त्वां न च पश्यति रविः
कथं प्रभो त्वामिह पश्यति कविः ॥६६॥

क्षणं न तिष्ठेदिह हे प्रभामय
विभाति मात्रं क्षणिकस्य सञ्चयः ।
मयि प्रभो स्नेहरसेन भूषिते
कृपानिधे त्वं कथमेव निष्ठुरः ॥६७॥

क्षणे क्षणे कल्पनमेव कोमलं
चित्तान्तराले चलतीव चञ्चलम् ।
त्वदीयभावस्य विभक्तवेपथुः
करोति मां प्रेममयो विनिश्चलः ॥६८॥

न याति चित्तं परिहाय वासना-
मनादिमोहस्य महेश मूर्च्छनाम् ।
क्व स्वर्गगङ्गा क्व च पापपीडितः
क्व मानसः क्वाद्य विमूढसारसः ॥६९॥

समस्तरोगस्य विभो महौषधि-
स्त्वमेव सत्यं न हि कोऽपि संशयः ।
न रेणुमात्रं चलतीह भूतले
जले स्थले वाऽत्र तवेङ्गितं विना ॥७०॥

विना वसन्तं हसतीह माधवी
घनान्धकारेऽपि विलोक्यते रविः ।
तथापि तप्तस्तपनश्च सर्वदा
यतस्त्वमेव प्रलयस्य कारणम् ॥७१॥

कदा कदा मे मनसि प्रहर्षिणी
तवैव विश्वस्य विभूतितारका ।
कदा कदा कोपकरालवह्निना
ज्वलत्यहो तोपवदेव मे मनः ॥७२॥

अनन्तधूमस्य धरा त्वमेव हे
त्वमेव चित्रस्य सुचित्रितोऽर्भकः ।
त्वमेव कालस्य कलानिधिः स्वयं
धरातलस्यैव रसालपादपः ॥७३॥

न कोऽपि सिंहो बलदर्पगर्वितो
विना कृपां ते विपिने ह गर्जति ।
न कोऽपि भेको भयभावकातरः
करालसर्पस्य मुखे पतत्यपि ॥७४॥

न कोऽपि पार्थः समरे महारथि-
र्यदि त्वमेवात्र न तस्य सारथिः ।
रथिं विनाप्यत्र चलत्यहो रथः
स्वयं त्वमेवात्र विभो महारथः ॥७५॥

न कोऽपि बालो लसतीह कोमलः
कृपां विना तेऽत्र सुखेन चञ्चलः ।
चलस्य मूलं त्वमसि हे नायक
चराचरस्यैव सखे प्रचारकः ॥७६॥

त्वमेव भावस्य विभक्तवैखरी
विशालविश्वस्य विलासनिर्झरी ।
अनन्तशब्दस्य प्रभो विभावक-
स्त्वमेव गीतं त्वमसीह गायकः ॥७७॥

वृथा न पत्रं पततीह भूतले
वृथा न पुष्पं झरतीह कानने ।
वृथा न सिंहो भ्रमति प्रभान्वितः
प्रभो समस्तं तव कान्तकल्पनम् ॥७८॥

अनर्गलं क्वापि व निर्झरस्वनं
प्रकाममाक्रन्दितकाननं कलम् ।
जलं कदा कुत्र मलेन दूषितं
प्रभो समस्तं तव देव सर्जनम् ॥७९॥

यदा शरीरं गिलतीह यातना
असाध्यरोगाः प्रदहन्ति चेतनाम् ।
विहाय सर्वं वसनं विभूषणं
करोति जीवस्तव नामकीर्तनम् ॥८०॥

विरौति नक्तं तितिरः कदाऽम्बरे
कदा च घूको घवतेऽतिकर्कशम् ।
निशामनादेव मनो विनिश्चलं
यदत्र भाव्यं त्वमसीह भावुकः ॥८१॥

त्वमेव वाचा स्फुरसीह सुन्दरः
ममैव कण्ठे चलतीव मन्दरः ।
अनन्तकान्तारवितप्तसैकते
त्वमेव राजन् ससुखं विराजसे ॥८२॥

न वेशभूषा न च ते विभूषणं
तथापि सौन्दर्यरसेन मण्डितः ।
न पण्डितः कोऽपि च पारमार्थिकं
यथार्थरूपं परिचेतुमस्ति नः ॥८३॥

अहं हि जन्तुः नवयौवनोद्धतः
सदैव रासस्य रसेन दूषितः ।
विभूषणं किं किमिहास्ति दूषणं
प्रभो न जाने तव किं विशेषणम् ॥८४॥

विचारराशिः सरतीह दूषितो
विशेषतो वेषविलाससंयुतः ।
न वात्र कश्चित्तव तत्त्वचिन्तको
विमूढचित्तं मम बोधने क्षमः ।।८५।।

अनन्तसिन्धोश्च सुदक्षनाविकः
त्वमेव रामो मम नेत्रदीपकः ।
यतो मनो मे कवितारसाप्लुतं
ततः सुकाव्येन करोमि वन्दनम् ।।८६।।

धनाय चेष्टां न करोमि कुत्रचित्
न वात्र मानाय मनः प्रधावति ।
महानिधे त्वं यदि चित्तचञ्चुके
धनस्य मानस्य च किं प्रयोजनम् ।।८७।।

न भोगलिप्सा लसतु प्रियेश्वर
कदापि चित्ते तव भावविह्वले ।
स्मरन् सहर्षं तव पादपङ्कजं
प्रयातु कालः सुखशान्तिसागरे ।।८८।।

सनातनस्त्वं विबुधेशवन्दित-
स्त्वमेव कंसस्य विनाशको मतः ।
हे रावणारिन् हर हे व्यथां मम
प्रयातु चित्तान्मम देव विभ्रमः ।।८९।।

विना वसन्तं सृजसीह सम्पदं
विनैव मेघं सृजसि प्रभो पविम् ।
विनापि बीजं भवतीह पादप-
स्तथैव भूमौ चलतीह पर्वतः ॥६०॥

आजन्ममूको वदति द्विधां विना
विनैव दोषं झरतीह यन्त्रणा ।
कदात्र मीनः सलिलं न पश्यति
महान्धकारस्य तमोऽत्र तिष्ठति ॥६१॥

त्वमेव सत्यं जगतीह निश्चितं
तथापि भीतिर्मम मानसे कथम् ?
यतोऽत्र दुःखेन विलापविह्वला-
स्तवैव दासा निजदोषकातराः ॥६२॥

स्मरन्ति केचित्तव पादपङ्कजं
स्तुवन्ति केचित् प्रणयेन ते पदम् ।
हसन्ति केचित्तव रूपविग्रह-
मनन्तनिद्राप्रलये लसन्ति के ॥६३॥

वदन्ति मिथ्या सकलं नभस्थलम्
तथैव माया तव रूपविग्रहः ।
न चास्ति लाभस्तव नामकीर्तने
वृथा हि कालो गडतीह गर्जने ॥६४॥

यथा यथा यामि तथा तथा मनो
मूलाध्ययनेऽत्र मे लीनम् ।
कथं प्रभातेषु विभाति भास्करः
कथं च भूमौ भ्रमतीह तस्करः ॥६५॥

यथैव घोरे विपिने वनेचरो
विहाय मार्गं भ्रमति व्यथाविषैः ।
तथैव नित्यं मम दुर्दशा प्रभो
करोमि किं हे वद विश्वनायक ? ॥६६॥

न चित्तवृत्तिर्मम बुद्धिधारिणी
न भाग्यरेखा मम वा सहायिनी ।
धनं हि मात्रं क्षणमत्र तिष्ठति
क्व यामि शम्भो वद हे प्रियेश्वर ? ॥६७॥

जलं न दत्तं न फलं कदाचन
मलस्य मूले वसतीह मे मनः ।
धनं प्रयाति सकलं प्रसाधने
प्रयाति कालो गरलस्य भक्षणे ॥६८॥

वनं न यामि प्रिय हे रसेश्वर
न यामि तीर्थं तव पूजनाय वा ।
व्रतस्य चिन्ता न च मानसे कदा
करोमि गेहे तव पादसेवनम् ॥६९॥

त्वमेव विश्वं निखिलं जलस्थलं
त्वमेव शाखा त्वमसीह पादपः ।
त्वमेव मूलं मम योगकर्मणः
प्रभो समस्तं तव देव सर्जनम् ॥१००॥

रवीन्द्रकुमारपण्डाकविना विरचितं 'प्रभो समस्तं तव देव सर्जनं' शतककाव्यं समाप्तम् ।

'संविद्' पत्रिकायां प्रकाशितम्

******

## ३

# नित्यं नौमि

भाषा यस्य सुधासमा सुमधुरा शैली तथा सुन्दरी
स्निग्धा काव्यकलैव यस्य विरला विश्वस्य भूमण्डले ।
काव्ये यस्य रसः प्रधानविषयश्चानन्ददानाय नो
नित्यं नौमि सुखप्रमुग्धमनसा तं कालिदासं कविम् ॥१॥

कीर्तिर्यस्य विराजते सुविपुला गङ्गेव नो भारते
नित्यं यस्य कवेः सुकाव्यकलिका चित्तानि चाकर्षति ।
दुःखं विस्मरतीह काव्यरसिको यस्यैव काव्यं पठन्
नित्यं नौमि सुखप्रमुग्धमनसा तं कालिदासं कविम् ॥२॥

विश्वे नास्ति कविः सुकाव्यरसिकः श्रीकालिदासोपमो
दृष्टा नैव च सा मनोहरकला वान्यस्य काव्ये कदा ।
काव्ये यस्य विराजते प्रतिपदं सौन्दर्यवाग्देवता
नित्यं नौमि सुखप्रमुग्धमनसा तं कालिदासं कविम् ॥३॥

स्निग्धं काव्यरसं निपीय मनुजा हृष्यन्ति तुष्यन्ति च
प्रौढां काव्यकलां विलोक्य चतुराश्चर्चारसैश्चञ्चलाः ।
स्निग्धा काव्यसुधा सुविज्ञमनसं बध्नाति सुखैर्यतो
नित्यं नौमि सुखप्रमुग्धमनसा तं कालिदासं कविम् ॥४॥

वाणी यस्य विलासवैभववती माधुर्यमन्दाकिनी
नाना भावविभावभूषणभरा भातीव या भास्वरा ।
पुष्टा काव्यकला कलङ्करहिता या कौमुदी कोमला
नित्यं नौमि सुखप्रमुग्धमनसा तं कालिदासं कविम् ॥५॥

विश्वे यस्य समुज्ज्वला सुसरणी संसेव्यते सादरं
सानन्दं च सदानुरागवशतो ध्यायन्ति यं भावुकाः ।
आदौ भक्तिविनम्रभावमनसा यं संस्तुवन्ति जना
नित्यं नौमि सुखप्रमुग्धमनसा तं कालिदासं कविम् ॥६॥

काल्याः स्नेहदयाबलेन महती प्रज्ञा नवोन्मेषिणी
प्राप्ता येन वरा विनाशरहिता पाण्डित्यसम्पादिनी ।
विश्वे या विरलाऽजरा सुविमलाऽम्लानाऽमरा मोहिनी
नित्यं नौमि सुखप्रमुग्धमनसा तं कालिदासं कविम् ॥७॥

हे काव्यप्रणयिन् विशिष्टप्रतिभ प्रज्ञाविवेकान्वित
त्वं मां वेदय किं न भारतधरा तेनैव धन्या सदा ।
धन्याः किं न वयं तया प्रतिभया श्रीकालिदासस्य यं
विज्ञा मुक्तगिरा स्तुवन्ति ससुखं साहित्यरासेश्वरम् ॥८॥

श्रेष्ठाः काव्यविदः कदा न विरताः संशोधने कर्मणि ।
लेखा लक्षगुणाश्च तैर्विलिखिताः श्रीकालिदासोपरि ।
मार्गैनकविधैः कृतं सुरसिकैः सारस्वतं शोधनम्
अद्यापि प्रचुराणि सन्ति लघवो रत्नानि रत्नाम्बुधौ ॥९॥

सुज्ञैर्विज्ञवरैः सदैव कथितं कालो जगद्भक्षको
मिथ्येयं कथनी विचारचतुर त्वं पश्य मिथ्या न किम्?
भूमौ भाति ह कालिदासकविता कान्तेव कान्ते रता
नित्यं नौमि सुखप्रमुग्धमनसा तं कालिदासं कविम् ॥१०॥

चित्रं पश्य सखे विचित्रभवने संसारसारस्य यद्
भूमौ मृत्तिकया सहैव मिलिताः प्रज्ञानुरक्ता वराः ।
वीरा भीमसमा भयङ्करबला नैवात्र पुंस्कोकिल-
स्तस्मान्नौमि सुखप्रमुग्धमनसा तं कालिदासं कविम् ॥११॥

श्रीकालिदासस्य कला लतेव
सुकोमला सुन्दरभावलग्ना ।
सा सुन्दरी शोभनमण्डिताङ्गी
स्वशोभया भाति सुकाव्यभूमौ ॥१२॥

सौख्यं समस्तं यदि काव्यलोके
तदस्ति पूर्णं कविकालिदासे ।
द्रष्टुं सदा तन्नवनेत्ररश्मि-
रपेक्षते केवलमेव नेत्रे ॥१३॥

यद्यस्ति चित्ते कविकालिदास-
काव्यस्य धारा रमणीयतायाः ।
राज्येन किं मे प्रजया च किं मे
भोगेन किं मे विभवेन किं मे ॥१४॥

येनैव भुक्तं ह तदेव तत्त्वम्
श्रीकालिदासस्य कलानिगूढम् ।
न याति भ्रान्तौ परिहाय तंस
मधौ यथा मत्तपिकस्य चित्तम् ॥१५॥

अनन्तमाधुर्यतरङ्गशीला
सौन्दर्यगङ्गा गहना रसाला ।
अवर्णनीया नवरागयुक्ता
कदा निगूढा सरला कदा सा ॥१६॥

रवीन्द्रकुमारपण्डाकविना विरचितं 'नित्यं नौमीति काव्यं समाप्तम् ।

******

# ४.

# संस्कृतवर्षम्

वर्षं सुहर्षं प्रददातु लोकान्
सौभाग्यलक्ष्मीश्च विभातु विश्वे ।
ज्ञानप्रदीपांज्वलयन् सहर्षं
मोहान्धकारं हरतु प्रगाढम् ॥१॥

सा विश्ववन्द्या सुरभारती नो
निराश्रया तिष्ठति भूतलेऽद्य ।
सा भारती भारतभूमिभागे
विभातु भासा नवभास्कराणाम् ॥२॥

सा ज्ञानगङ्गा नवगौरवत्वं
संप्राप्य वर्षे च नवैः प्रवाहैः ।
पुनश्च भूमिं परिमार्जयन्ती
देशस्य लोकान् प्रददातु मोदम् ॥३॥

वर्षे च सारस्वतशुद्धविद्या
विद्यालयेष्वेव लसन्तु नित्यम् ।
या वैदिकी वेदमयी विशाला
सा भारती भारते भातु नित्यम् ॥४॥

विश्वस्य विज्ञा विलसन्तु नित्यं
प्रज्ञा च विज्ञानमयी विभातु ।
अज्ञाः समस्ताः परिहाय तेषां
कुकर्मवृत्तिं सुखिनो भवन्तु ॥५॥

या संस्कृतश्रीः सकलं ददाति
या माननीया जननीति गीतिः ।
या भारतस्यैव ललामभूता
तस्याः सुवर्षे भवतु प्रकाशम् ॥६॥

यस्या विनाशे वयमेव नष्टा
हानौ च यस्या वयमेव हीनाः ।
यां पूजयन्ति प्रचुरेण प्रेम्णा
वैदेशिकाः सा नवरूपमेतु ॥७॥

या पण्डितानां मुखमण्डनश्री-
र्या खण्डितानां भयदुःखहेतुः ।
यां मृतभाषेति वदन्ति भण्डा-
स्ते दण्डनीयाः प्रबलाः प्रचण्डाः ॥८॥

या संस्कृतिः संस्कृतमाध्यमेन
प्रचारयन्ती हितमैत्रीभावान् ।
दण्डायमाना नवतां निधाय
तस्या हि मूलं किल संस्कृतं नः ॥९॥

यत्संस्कृतं भारतजीवपिण्डं
यत्संस्कृतं भारतभाग्यभूमिः ।
यत्संस्कृतं भारतभूमिगर्वं
तद् गौरवं भारतभास्कराणाम् ॥१०॥

सा देवभाषा जननी वरेण्या
वर्षे च विश्वे लसतु समोदम् ।
अस्माकिनां संस्कृतसेवकानां
सुकामनाबीजमिहैव मात्रम् ॥११॥

वयं न शान्ता यदि संस्कृतश्री-
र्भवेन्न पूज्या प्रतिगेहमध्ये ।
यावन्न दैवी नवभारती सा
समग्रविश्वे न विलासशीला ॥१२॥

ये भारतीया नवभारतस्य
सौभाग्ययत्नेषु सदैव लग्नाः ।
समुन्नतिं ये नवभारतस्य
संकामयन्ते सततं स्वचित्ते ॥१३॥

जानन्ति ये भारतभाग्यरेखां
द्रष्टुं समर्था नवदूषणानि ।
ते चिन्तयन्ति प्रमुखा विधिज्ञाः
सुसंस्कृतास्ते नवमुक्तधाराम् ॥१४॥

ये भारतीयाः सततं हितार्थं
देशस्य विश्वस्य च चिन्तयन्ति ।
विज्ञानिनस्ते कथयन्ति नित्यं
असंस्कृतं नश्यतु भारतेऽद्य ॥१५॥

काले कराले करणं विशेषं
येनैव साध्यानि ह मङ्गलानि ।
सर्वाणि सौभाग्यकराणि तानि
लभ्यानि येनैव सुखेन नित्यम् ॥१६॥

न संस्कृतं केवलमेव भाषा
न कर्मकाण्डाय निमित्तमात्रम् ।
न ज्योतिषीणां धनसाधनाय
आवश्यकीयं भुवि देवभाषा ॥१७॥

न संस्कृतं कातरभीरुभाषा
नेयं सुलभ्या सरलेऽपि मार्गे ।
काठिन्यमेव प्रमुखं हि तस्या
न दूषणं भूषणमेव नित्यम् ॥१८॥

न ब्राह्मणानां न च शासकानां
न पण्डितानां न च याज्ञिकानाम् ।
इयं सुभाषा किल लोकभाषा
लोके च लभ्या शुभमङ्गलाय ॥१९॥

या भारती भारतदेशमध्ये
न सीमिता सुन्दरशुभ्रदेहा ।
विश्वस्य श्रेष्ठाः पुरुषा महान्तो
यां लोकभाषां परिमण्डयन्ति ॥२०॥

सम्मानयन्ति प्रमुखाः सुविज्ञा
यत् संस्कृतं सादरमेव विश्वे ।
परीक्ष्य सर्वां सुगुणावलीं ते
न दोषलेशं परिदर्शयन्ति ॥२१॥

या संस्कृतेः सुन्दरस्निग्धसिन्धु-
र्या संस्कृतिं धारयते स्वचित्ते ।
अनादिकालात् कठिनैः प्रयत्नैः
संस्कृतिगङ्गा वहतीह लोके ॥२२॥

या सुन्दरी सुन्दरशब्दबन्धै-
र्विमोहिनी या नवभावनाभिः ।
यः शब्दसिन्धुः विरलश्च विश्वे
माधुर्यमूर्तिरिव या विभाति ॥२३॥

वेदस्य विद्यां परिवर्णयन्ती
वेदाङ्गतत्त्वं परिपोषयन्ती ।
पौराणिकं या परिमण्डयन्ती
सा राजते विज्ञविचारराज्ये ॥२४॥

वर्षेऽत्र हर्षं पृथिवीं पुनातु
कार्यक्रमास्ते सकले चलन्तु ।
भवन्तु मान्या विबुधा वरेण्याः
सुसंस्कृसारविकासचित्ताः ॥२५॥

संस्था विशिष्टा विविधैः प्रयत्नै-
र्याः संस्कृतं सेवितुमेव मग्नाः ।
कुर्वन्ति कार्याणि यथोचितानि
तास्ताः समस्ता विकसन्तु नित्यम् ॥२६॥

पठन्ति नित्यं सततं जना ये
संपाठयन्ते ससुखं सदा च ।
वदन्ति ये संस्कृतमेव विश्वे
सदैव सर्वे सुखिनो भवन्तु ॥२७॥

प्रचारकार्ये युवकाः प्रवीणा
विद्याविलासे सततं निमग्नाः ।
ये भग्नचित्ता न कदा भवन्ति
वित्तैर्विहीनाः सुखिनो भवन्तु ॥२८॥

ये तान्त्रिकाः संस्कृतमन्त्रविद्यां
संबोधयन्ति प्रथयन्ति चाद्य ।
आध्यात्मविद्यां कथयन्ति लोका
जयन्तु ते संस्कृतवीरपुत्राः ॥२९॥

ये भावुकाः संस्कृतभावनायां
साहित्यसेवाव्रतयोगनिष्ठाः ।
सृजन्ति साहित्यसुधासमुद्रं
निर्मान्ति काव्यानि च नूतनानि ॥३०॥

गर्जन्ति तर्जन्ति कदा न भूमौ
यथा मेघा नो जलदानदक्षाः ।
ते वीरपुत्रा नवभास्कराश्च
सृजन्तु साहित्यनिधिं समोदम् ॥३१॥

गवेषका ये परिशोधयन्ति
विज्ञानरत्नानि विचारमार्गे ।
जीर्णासु शीर्णासु च मातृकासु
सारस्वतास्ते सुखिनो भवन्तु ॥३२॥

सम्पादकाः संस्कृतपत्रिकाणां
कुर्वन्ति ये संस्कृतरक्षणाय ।
कष्टेन यत्नं सुखिनो भवन्तु
ते साधकाः संस्कृतशिष्टपुत्राः ॥३३॥

प्रशासकाः संस्कृतदत्तचित्ताः
संप्रेरयन्तीह जनान् सदा ये ।
ते वीरपुत्राः सुखिनो भवन्तु
वर्षे सहर्षं विलसन्तु लोके ॥३४॥

वर्षञ्च संस्कृतमयं हि जातम्
हर्षञ्च संस्कृतमयं च भूतम् ।
तथापि चित्तं न हि शान्तमत्र
न संस्कृता किन्तु तथापि भूमिः ॥३५॥

रवीन्द्रकुमारपण्डाकविना विरचितं
'संस्कृतवर्षम्' काव्यं समाप्तम् ।

'संस्कृताऽमृतं' पत्रिकायां प्रकाशितम्

******

# ५.

# अन्योक्तयः

लोके सिद्धं जगति विदितं काञ्चनं कान्तवर्णं
गेहे गेहे भवति सुतरां तस्य रूपस्य मूल्यम् ।
लौहं दुःखेन यदि कुरुते तेन साकं तदर्थं
संग्रामं किं भवति सफलं भूमिमध्ये कदापि ॥१॥

काकः कृष्णो जननसमयात् किं न लोके प्रसिद्धम्
कार्यं तस्यैव च सुविदितं भूतले सर्वकाले ।
यत्नं कृत्वा भ्रमति स यदा श्वेतरूपस्य कामी
चित्तं तस्य ग्रसति सहसा दुःखपङ्कस्तदानीम् ॥२॥

किं संसारे भवति सहसा वानरो जन्तुनाथः
किं वा मूर्खो भवति नगरे कालिदासो रसज्ञः ।
किं नो भेको वदति मधुरं क्रोधरूक्षो वसन्ते
सर्वं तत्त्वं यदिह सकलं तेन देवेन दत्तम् ॥३॥

किं कान्तारे भवति कदली किं वने पारिजातः
किं वा भूमौ भवति ह कदा कानने कल्पवृक्षः ।
नैवोत्पन्नं नयनसुखदं सागरे पुण्डरीकः
चेष्टा सर्वा भवति विफला मूर्खतामोहहेतोः ॥४॥

वर्णं गौरं सुखकरमिह प्रियतायै सदैव
किं कर्तव्यं यदि ह विधिना नैव दत्तं सुरूपम् ।
किं गन्तव्यं गहनविपिनं दुःखहेतोः सुखार्थं
भ्रामं भ्रामं किमिह कटके नाटकं कार्यमस्ति ॥५॥

सिंहो वीरो विचरति वने सम्मुखे वानराणां
तेषां कार्यं यदिह विदितं सहर्षम् ।
चित्ते चित्ते हसति मधुरं क्रीडनानि विलोक्य
तेषां रीती रचयति पुनर्नूतनां कार्यशैलीम् ॥६॥

सन्ध्यातारा हसति मधुरं मानिनी मोदमाना
चित्ते तस्याश्चपललहरी भास्करो भावहीनः ।
नास्ति ज्वाला न च परिचिता यन्त्रणा जालमध्ये
दर्शं दर्शं चलति समयो घोटकव तीव्रः ॥७॥

साधुस्तत्रैव च विचरति यत्र चौरः सशङ्कं
पङ्के तस्मिन् स्फुटति कुमुदं पङ्कसङ्गेन नित्यम् ।
पारावारं मिलति मधुरा जाह्नवी योग्यकाले
सर्वं सिद्धं भवति समये तत्र चिन्ता कथं ते ॥८॥

संगर्जन्तु प्रखरमुखराः कुक्कुराः क्रोधदग्धा-
स्तां संबोध्य भवतु ह भृशं भाषणं दुर्जनानाम् ।
चिन्ताहीनो विचरति खगो राजहंसो मरालो
लीला तस्य प्रतिदिनमतो वर्धते वै स्वभावात् ॥९॥

जगति न विदितं किं दूषणं दुर्जनानाम्
अविदितमिह नैवं भूषणं सज्जनानाम् ।
भवतु भुवनरम्यः कालसर्पो भुजङ्गो
न च दशति कदा किं सुन्दरं शुभ्रगात्रम् ॥१०॥

अभिनवनवरीत्या गर्जतु क्रोधदग्धः
प्रतिपदमिह भूमौ कामतप्तो निदाघः ।
न हि भवति विरक्तः सागरो रत्नसिन्धुः
अनवरतमेवात्र व्यस्तता यस्य कार्ये ॥११॥

वितरति वनवृक्षं स्नेहराशिं वसन्तो
हसति कुसुमकन्या स्नेहधन्या कुमारी ।
ज्वलति यदि वनेऽस्मिन् हिंसुकः कालवह्नि-
र्गलति विपिनमेव क्रोधहेतोर्न चान्यः ॥१२॥

प्रवहतु वनदेशे भीषणश्चक्रवातः
प्रबलपवनवेगैः सन्तु वृक्षा विनष्टाः ।
विलसतु न च शोभासुन्दरी रूपलक्ष्मीः
न कथय मम कर्णे भीषणं दूषणं तत् ॥१३॥

इह विलपति भूमिः सस्यशोभा विनष्टा
न मिलति जलबिन्दुर्मेघमाला च नष्टा ।
अहमिह नवभेकः केवलं लोकयामि
न गलति जलधारा दोषहेतोश्च कस्य ॥१४॥

न मम मनसि कष्टं नैव दुःखस्य वह्निः
सुविदितमिह सर्वं कारणं दूषणस्य ।
यदि भवति सुखाय प्राक्तनं वस्तुजातं
न किमपि कथनीयं स्वसुखार्थं ममैव ॥१५॥

अहिमिह मरुभूमौ भावनां मे त्यजामि
विकचकमलकान्तिं नैव संशोधयामि ।
न हि गहनवनाद्वा चन्दनं चानयामि
मम नवनवकाव्ये दूषणं दर्शयामि ॥१६॥

अजगर इव कोपं चित्तकोणे निधाय
भ्रमति न मम चित्तं वेदनायां कदाचित् ।
न भवतु वनवृक्षः सुन्दरः शुभ्रकायः
कथमपि नहि दुःखं श्रावणेऽस्मिन् घनस्य ॥१७॥

मम परिचयपत्रं कीर्तयन्ती वनानी
वदति विपिनकोणे सर्वदा सत्यवाक्यम् ।
पुनरपि परितोषैर्विस्मरन्दुःखजालं
चलति हृदयभृङ्गः सर्वदुःखं विहाय ॥१८॥

कुसुमकलिकारुण्यं भीषणं भीमरूपं
सरलहृदयवीणावाद्ययन्त्रे विलीनम् ।
न नयननिकटे मे साधनं योग्यमस्ति
तदपि ह कवयामि प्रेरणार्थं सखानाम् ॥१९॥

न भवतु विषवृक्षः शोभनः कर्मभूमौ
न फलतु विषपुष्पं कानने मे सुरम्ये ।
न लसतु विषवल्ली सुन्दरे मन्दिरे मे
अभयवरदहस्तां प्रार्थयामि तदर्थम् ॥२०॥

हरतु मम समस्तं दूषणं दुष्कृतस्य
प्रचलतु नवलीला साधनायाः सदैव ।
न भवतु भवनं मे सुन्दरं वा कदाचित्
न मिलतु नवयानं शोभनं कान्तिपूर्णम् ॥२१॥

न च वितरतु विद्यां शारदा शुभ्रवस्त्रा
मम हृदयमधुपो मार्गणेऽस्मिन् प्रमत्तः ।
लिखतु ह कलमो मे सुन्दरीं काव्यकीर्तिं
कथयतु मम चित्तं स्नेहसिक्तं वृतान्तम् ॥२२॥

काले काले करालेऽस्मिन् घनान्धकारगह्वरे ।
दर्शयन्ति क्षणं मात्रं स्वतेजांसीह खद्योताः ॥२३॥

भ्रमति सूकरो मार्गे भुङ्क्ते मार्गगतं मलम् ।
भ्रमति च तथा धेनुः संशोध्य सुन्दरं तृणम् ॥२४॥

ददाति सौरभं नित्यं वने तिष्ठश्च चन्दनम् ।
ज्वालयति ज्वलत्येवं स्वयं गृहे हुताशनः ॥२५॥

तृणमिव तृणं लोके पादप इव पादपः ।
जन्मतो निश्चितं सर्वं वंशानुसारमेव तत् ॥२६॥

चन्दने सौरभं दत्तं कथं न चान्यपादपे ।
मन्ये निर्धारितं धात्रा तस्य स्वभावकारणात् ॥२७॥

मह्यं न रोचते कस्य पुंस्कोकिलस्य कूजनम् ।
काककुले प्रविष्टोऽहं तस्मात् काका मम प्रियाः॥२८॥

गर्जतु गगने मेघः सगर्वं भयदायकः ।
विलसति विलासेन सागरस्य तिमिङ्गलः ॥२९॥

रे समुद्र कथं भीमं करोषि गर्जनं वृथा ।
अधुना विदितं लोके पानीयं न जलं तव ॥३०॥

सूकरस्य प्रियं नैव घृतं यद् बलवर्धकम् ।
कुक्कुरस्य प्रियं नैव मन्दिरं सुखदायकम् ॥३१॥

गर्जति श्रावणे भेको वसन्ते किन्तु कोकिलः।
गर्जति कुक्कुरः किन्तु सायंप्रातरुच्छृंखलः ॥३२॥

रवीन्द्रकुमारपण्डाकविना विरचिता अन्योक्तयः समाप्ताः।

*******

## ६.

# विहगं प्रति

बलाहकानां वलयं प्रविश्य
कोलाहलं हे गगने करोषि ।
हलाहलं किं न तवास्ति बुद्धि-
श्चलाचले त्वं चलसि सगर्वम् ॥१॥

आकाशदेहे भ्रमणं तवैव
धन्यं सखे जीवनमेव पूर्णम् ।
न बन्धभीतिर्न च मुक्तिचिन्ता
न शास्त्रविद्याध्ययनस्य दुःखम् ॥२॥

न वास्ति चिन्ता चलितुं मलेऽस्मिन्
प्रदूषिते भारतभूमिभागे ।
यत्रैव नक्रा गिलितुं प्रमत्ता
धावन्ति सर्पाः सततं प्रफुल्लाः ॥३॥

यत्रैव नष्टा मधुरा वनश्री-
र्वृक्षा विच्छिन्ना तटिनी च शुष्का ।
वनप्रदेशेषु न सन्ति लोलाः
सुकोमला सुन्दरशावका वा ॥४॥

मृगा निबद्धाश्च ग्रहालयेषु
न यत्र खाद्यं न च वासभूमिः ।
न वासयोग्यं परिवेशसौख्यम्
स्वतन्त्रसञ्चारविमोहलीला ॥५॥

हे मित्र पश्य प्रकृतिं ममैव
तां दुःखिनीं दूषणदोषदग्धाम् ।
प्रपीडिता या नवपीडकैश्च
प्रतिक्षणं क्षीणदशामुपैति ॥६॥

प्रदूषणैः शोषणदोषरासै-
र्नानाविधैस्ताडनतीक्ष्णकष्टैः ।
सन्तापिता सा प्रतिशोधचित्ता
रुष्टेव कष्टं प्रददाति लोकान् ॥७॥

अन्यायवात्या प्रबला प्रचण्डा
विनाशयन्ती भ्रमतीव लोके ।
अशान्तवातावरणे वरेण्या-
स्त्यजन्ति कष्टैश्चतुराः सुमार्गम् ॥८॥

येनैव मार्गेण सुखं समस्तं
येनैव चायाति सुखेन वित्तम् ।
येनैव लक्ष्मीः सततं प्रसन्ना
तस्मिन् कुमार्गे विचरन्ति विज्ञाः ॥९॥

तथानुकुर्वन्ति यथा प्रथा नो
महाजनो येन गतः स पन्थाः ।
तमेव मार्गमनुसृत्य लोकाः
कुर्वन्ति मुग्धाः सकलं कुकार्यम् ॥१०॥

तदर्थमत्रैव मलस्य मूलं
सविस्तरं संक्रमतेऽद्य भूमौ ।
भीमा भ्रमन्तीह विनाशनार्थं
मद्देशसंस्कारपरम्पराणाम् ॥ ११ ॥

देशेऽद्य सर्वत्र विलासवादः
प्रवञ्चकानां कुविचारनादः ।
प्रतारकानां नवकौशलानि
पलातकानां नवभोगलिप्साः ॥१२॥

दिने दिने सा परिवर्धतेऽत्र
हे मित्र यत्र प्रखरा कुनीतिः ।
कथं सुखं स्यादधुना धरायां
धूर्ताः समस्ताः स्वसुखाय मत्ताः ॥१३॥

ग्रामे न शान्तिर्नगरे न शान्तिः
कार्यालयेषु प्रबला कुनीतिः ।
सर्वत्र देशेऽद्य विनाशभीतिः
सन्त्राससतापेन च याति रात्रिः ॥१४॥

यस्यां धरण्यां पशुराज्यमस्ति
प्रशासकानां न हि नीतिनिष्ठाः ।
न्यायस्य तत्त्वं निहितं गुहायां
का शान्तिधारा धरणीं पुनाति ॥१५॥

वर्धन्ते कंसाः कलिकौणपाश्च
देशस्य ग्रामेष्वधुना प्रमत्ताः ।
तेष्वद्य येषु प्रचुरेण प्रेम्णा
विलासनृत्यं कमला करोति ॥१६॥

हिंसातुरा हिंसनशक्तियोगैः
संकामयन्ते विभवानि भोक्तुम् ।
तेनैव मार्गेण सुखं समस्तं
कुर्वन्ति लब्धुं विविधं प्रयत्नम् ॥१७॥

हत्या तदर्थं हरणं तदर्थं
प्रहारलीलाः सकलास्तदर्थम् ।
नराधमानां शरणं तदर्थं
विलासभूमौ भ्रमणं तदर्थम् ॥१८॥

वर्धन्ते चौरा ह निशाचराश्च
संवर्धते दानवदुष्टलीला ।
तेषां हि दुष्कर्मवतां जनानां
दुष्कृतिमुत्पादयतीह दुःखम् ॥१९॥

दुष्कर्मणां दुष्टचरित्रभाजां
राज्येषु राज्येषु च राजनीतिः ।
आकृष्य देशं गिलतीव मन्ये
विमोहिनी भीषणराक्षसीव ॥२०॥

स्तरे स्तरे चञ्चलचण्डिकेव
दुर्नीतिरम्भा रमते सुकुम्भा ।
न रावणारी रमणं च रोद्धुं
बद्धुं ह शक्तो नियमप्रकोष्ठे ॥२१॥

सन्त्रासवादस्य कथां न पृच्छ
विलासवादस्य कथां न पृच्छ ।
व्यथातुरं मे हृदयं दयाभि-
र्देशस्य दुःखार्तदशां न पृच्छ ॥२२॥

न पृच्छ मां सन्ति कथं युवानः
सुपण्डितास्ते कथमद्य देशे ।
जीवन्ति ते किं च रसैकचित्ता
भक्ताः समस्ताः समयेऽद्य देशे ॥२३॥

स्थानं न भूमौ सुखशान्तिपूर्णं
देशस्य देहं व्यथया विदीर्णम् ।
न बिन्दुमात्रं सुखचन्दनस्य
रोगाः समस्ता विलसन्ति देशे ॥२४॥

हे मित्र पश्य प्रणयो न भूमा-
वियं हि भूमी रणभूमिमात्रम् ।
स्थानं न चात्र भ्रमणाय योग्यं
जीवामि दुःखेन सखे विहंग ॥२५॥

'भारतोदयः' पत्रिकायां प्रकाशितम्

रवीन्द्रकुमारपण्डाकविना विरचितं 'विहगं प्रति' काव्यं समाप्तम् ।

******

## ७.

# रे चातक

रे चातक त्वं कथमत्र दुःखात्
ते दैन्यभावं वदसि समस्तम् ।
रे मित्र पश्य व्यथनं समस्तं
किं वेदनीयं ह कदा कुपात्रम् ॥१॥

श्रोष्यन्ति किं ते तव दुःखवृत्तं
किं ते हरिष्यन्ति तवैव दुःखम्।
जानन्ति किं ते हृदयं किमस्ति
ये माननीया बलदर्पहेतोः ॥२॥

सत्तास्ति तेषां किल साधनं हे
भीतास्तया स्वार्थपरा नरा ह ।
धावन्ति पश्चादिह किन्तु तेषां
लब्धुं समस्तं विभवञ्च विश्वे ॥३॥

न पश्य तेषां वसनं च शुभ्रं
न पश्य तेषां स्मितहासधाराम् ।
ये सन्ति दुष्टा धनमोहग्रस्ताः
किं ते करिष्यन्ति सुखाय मूढ ॥४॥

हसन्ति ये चातक दैन्यतायां
लसन्ति दुःखैस्तव दुःखकाले ।
संवर्णयन्तीह सदा स्वकीर्तिं
स्वगौरवेणाद्य भवन्ति मुग्धाः ॥५॥

अल्पस्य हेतोर्बहु हातुमिच्छ-
न्ते लोभलुब्धा निजलाभनिष्ठाः ।
जीवन्ति भूमौ भ्रमणाय मात्रं
दयाकटाक्षैश्च दयावतां ते ॥६॥

गर्जन्ति घोरे च निदाघकाले
प्रदर्शयन्तो निजशक्तितेजः ।
इतस्ततो विभ्रमणाय मत्ताः
प्रदर्शनं जीवनलक्ष्यमेव ॥७॥

न कोऽपि तेषामिह चास्ति बन्धु-
र्बन्धुत्वभावेन च कोऽपि तुष्टः ।
संप्रार्थ्य तानेव न कोऽपि चेष्टं
लब्धुं प्रयासी परिदृश्यते माम् ॥८॥

संप्रार्थयन्ते सरलाश्च ये वा
तानेव मूढाः सुखिनो न सन्ति ।
किं ते लभन्ते सरलान्निहत्य
ते पामरा दीर्घनिदाघकाले ॥९॥

न केवलं तेऽपि जलेन हीनाः
स्वभावतो ते हृदयेन हीनाः ।
तेषां न बुद्धिर्न च मित्रभावः
कष्टं लभन्ते प्रगतौ नराणाम् ॥१०॥

प्रयान्तु प्राणाश्च तथैव दुःखा-
न्न मानहानिर्भवतु कदा ते ।
इत्येव चिन्त्य करणीयमेवं
कार्यं सदा चातक हे सुमित्र ॥११॥

रे चातक त्वं भव शान्तचित्तो
विचार्य कार्यं कुरु मङ्गलाय ।
सुखं न लभ्यं च नराधमानां
सेवाशरण्ये ह कदा खलानाम् ॥१२॥

संसेवनीयाः सुजनाः सुमेधा-
स्त्वया सदा चातक सादरं हे ।
ये नीरदानैः पृथिवीं प्रसन्नां
सस्यैः समस्तैश्च सभाजयन्ति ॥१३॥

विलोक्य दुःखं ह निदाघकाले
मेघाश्च ये वृष्टिभिरार्द्रयन्ति ।
सृजन्ति हर्षं मधुरं प्रशान्तं
ते माननीयास्तव सेवनीयाः ॥१४॥

बलाहका ये च विलासमग्ना
विलासरासैर्निजबुद्धिशून्याः ।
विवेकहीनाः किल शोभमाना
हिताय ते किं नहि दर्शनाय ॥१५॥

हितं किमर्थं करणीयमेवं
ज्ञातुं न शक्ता अधमा धरण्याम् ।
अज्ञानहेतोश्च नभोविताने
भ्रमन्ति मेघा व्यतीताय कालम् ॥१६॥

कालक्रमैस्ते परिवर्तमानाः
स्थानक्रमैरेव विवर्तमानाः ।
संदर्शयन्तो निजरूपवेषान्
हरन्ति मात्रं हृदयं सुवाक्यैः ॥१७॥

मुञ्च त्वमेवाद्य च दैन्यभावं
रे चातक कोमल लोलचित्त ।
पश्यसि यं यं निकटेऽपि तस्य
मा ब्रूहि बन्धो तव दुःखवृत्तम् ॥१८॥

भारतोदयपत्रिकायां प्रकाशितम्

रवीन्द्रकुमारपण्डाकविना विरचितं
रे चातकेति काव्यं समाप्तम् ।

******

८.

# धनायनम्

काक उवाच

पृच्छति कोकिलं काको देहे ते कालिमा कथम् ।
कथं तव स्वरे नास्ति माधुर्यं चित्तरञ्जकम् ॥१॥

कथं त्वं कूजसि प्रीतौ वसन्ते केवलं सखे ।
कथं तव नगरेऽस्मिन्नास्ति कोऽपि प्रशंसकः ॥२॥

कथं न करोषि कार्यं शुभं लोकोपकारकम् ।
यदि नास्ति तव प्रज्ञा पृच्छ मां कथयामि ताम् ॥३॥

पठसि केवलं शास्त्रं जीर्णं यत्तु पुरातनम् ।
किं तेन प्राप्यते मित्र चिन्तय केवलं धनम् ॥४॥

धनं लक्ष्मीर्धनं दारा धनं बन्धुर्धनं सुखम् ।
धनं पुत्रप्रपौत्राणां सर्वेषां सुखसाधनम् ॥५॥

धनं व्याधिहरं मित्रं सर्वमङ्गलकारकम् ।
सर्वेषां दुःखतप्तानां धनं दुःखविनाशकम् ॥६॥

धनेन भवितुं शक्तो महावक्ता महाकविः ।
विराजते महामूर्खो धनेन सर्वदा भुवि ॥७॥

आकर्षति धनं चित्तं विकर्षति धनं मनः ।
कर्षति हृदयं क्षेत्रं धनमत्र प्रतिक्षणम् ॥८॥

संसारसागरे रत्नं धनं सर्वोपकारकम् ।
धनं तु तारकं कुत्र कुत्र तन्मारकं धनम् ॥९॥

धनाय भाषणं सर्वं धनाय शोषणं सदा ।
धनाय धावनं नित्यं धनं रसायनं यदा ॥१०॥

रामायणं न जानामि न जानामि रणायनम् ।
जानामि केवलं मित्र धनायनं रसाङ्गणम् ॥११॥

धनेन वर्धते धर्मो धर्मेण च सुखं परम् ।
सुखेन नश्यति सर्वा शुष्कता दुःखदायिनी ॥१२॥

नरत्वञ्च समाप्नोति वानरत्वं विनश्यति ।
हस्तपद्मे यदा लक्ष्मीः स्वयमागत्य खेलति ॥१३॥

चलति निश्चलं भूमौ मौनी भवति वाक्पटुः ।
कराले कामकान्तारे चलति चपलो बटुः ॥१४॥

भवति पामरो दाता भक्षको जननायकः ।
गदर्भो लभते विद्यां काको भवति गायकः ॥१५॥

सभायां गर्जति भ्रष्टो भेको विद्याविशारदः ।
येन केन प्रकारेण नेता भवति नारदः ॥१६॥

धनेन धवलं सर्वं भवति सुतरां मलम्
तत्त्वं न वेत्ति वै योऽत्र दुःखे स जनस्तिष्ठति ॥१७॥

धनं मोहकरं दुग्धं धनं हितकरं मधु ।
कामाग्निदग्धचित्तानां धनं प्रीतिकरो विधुः ॥१८॥

धनं जनस्य सौन्दर्यं धनं गृहस्य वैभवम् ।
धनं विलाससौधस्य श्रीमयं शुभ्रकेतनम् ॥१९॥

अनाथस्य धनं नाथोऽसहायस्य च सोदरः ।
असमर्थस्य सामर्थ्यमरक्षितस्य सायकम् ॥२०॥

क्रीडाभूमौ गदर्भाणां धनं विशेषसाधनम् ।
धनेन लभ्यते विद्या संशोधनं धनेन च ॥२१॥

किमस्ति भूतले मित्र यन्न साध्यं धनेन ते ।
अधुना सभ्यता भिन्ना गतं सर्वं पुरातनम् ॥२२॥

नवे युगे नवा दृष्टिः सर्वमत्रैव नूतनम् ।
धनाय नूतना मार्गाश्चोद्भाविता विभावुकैः ॥२३॥

स्तरे स्तरे समाजस्य धनाय नवचेतना ।
विहाय सकलं धर्मं धावन्ति सततं जनाः ॥२४॥

धनमत्र सुखस्रोतो धनं वनस्य चन्दनम् ।
किम्भूतं भूषणं वित्तं जानाति मधुरं मनः ॥२५॥

कोकिल उवाच

कथं सुखकरं वित्तं कथं हितकरञ्च तत् ।
कथं तत् साधनं श्रेष्ठं ज्ञातुं शक्नोमि न सखे ॥२६॥

दुःखस्य कारणं वित्तं तत्तु विनाशकारणम् ।
यस्यास्ति हृदये शान्तिस्तस्य धनेन किं वद ॥२७॥

स्वतः सुखं समायाति सन्तोषो यदि मानसे ।
हिंसाद्वेषविहीनानां चिरशान्तिः सदैव हे ॥२८॥

जीवनं मूल्यवानत्र जीवनं सुखसाधनम् ।
जीवनाय धनं काम्यं यदावश्यकमेव तत् ॥२९॥

अधिकस्य विशालस्य तस्य संग्रहणेन किम् ।
नश्यति तेन वै निद्रा तेनैव सकलं बलम् ॥३०॥

जीवनं क्षणिकं यत्र तत्र सुखमपेक्षते ।
शान्तिमयं सुखं त्यक्त्वा लभ्यं धनेन किं वद ॥३१॥

धनं हि कारकं सत्यं धनं मारकमेव तत् ।
अज्ञानमिव तत्तीक्ष्णं नानादुःखस्य कारणम् ॥३२॥

काक उवाच

धनं मोहस्य माधुर्यं धनं क्रोधस्य वैखरी ।
धनं चित्तचकोरस्य मोहिनी रूपनागरी ॥३३॥

धनं शून्यस्य सौन्दर्यं धनं कामस्य कल्पना ।
धनं विलासकृष्णस्य नूतना वेणुमूर्च्छना ॥३४॥

कान्तारस्य धनं रूपं पाषाणस्य धनं वपुः ।
सरलस्य धनं शक्तिः कृपणस्य धनं प्रभुः ॥३५॥

धनेन शोभते सौधं धनेन शोभते मही ।
न दृश्येत धनाभावे श्रीरामो न च जानकी ॥३६॥

धनं चिन्ताकलापस्य काकलिः कामरूपिणी ।
रूपसम्भारव्याघ्रस्य धनं सुमधुरो ध्वनिः ॥३७॥

कल्पवृक्षसमं वित्तं सर्वदा चित्तचालकम् ।
आलोको दृश्यते कुत्र तेनैव च भूमण्डलम् ॥३८॥

बकस्य भाषणं वित्तं तत्तु काकस्य भूषणम् ।
कामिनीकामकान्तारे धनं नवं रसायनम् ॥३९॥

धनं देवस्य दौरात्म्यं धनं वनसरोवरः ।
धनं विशालसौधस्य सुकेतुः सुमनोहरः ॥४०॥

धनं माया धनं काया धनं धूमस्य धारणा ।
धनं घनान्धकारस्य मधुरा नववासना ॥४१॥

धनं विना न वै भूमौ दृश्यते कोऽपि सुन्दरः ।
धनेन सहसा लोके तिरस्कृतोऽपि भूसुरः ॥४२॥

धनं स्वर्गः धनं ब्रह्म धनं वैकुण्ठमेव च ।
धनामृतं विना विश्वे सुखं नैव च नैव च ॥४३॥

धनं ददाति सौन्दर्यं धनं ददाति यौवनम् ।
धनं विना गृहं शून्यं जीवनं वै यथा तृणम् ॥४४॥

धनं यस्य स वै राजा स महान् परमेश्वरः।
स वै दाता स संस्कारी स महात्मा विभाकरः ॥४५॥

धनं यस्य सुखं तस्य भोगाय तस्य वस्तूनि ।
द्वाराद् द्वारान्तरं याति भिक्षार्थश्च महामुनिः ॥४६॥

अकिञ्चनस्य किं स्थानं समाजे भवतीह नः ।
किं समाजे कदा मानं लभते यः सदा दीनः ॥४७॥

तस्य भवति किं पूजा यस्य नास्ति धनार्णवः ।
श्मशाने वसति प्राज्ञो यद्यपि स सदाशिवः ॥४८॥

धनं विना गृहोद्याने न पुष्पं क्रीडति कदा ।
नायाति मलयो भीतो नायाति कामना यदा ॥४९॥

धनं विना मनो भूतो धनं विना जनस्तृणम् ।
धनं विना गृहं कारा धनं विना न भोजनम् ॥५०॥

धनेन वर्धते तेजः शरीरे मासवर्तुले ।
धनेन च महत्तेजो जायते मुखमण्डले ॥५१॥

धनेन भाषणे शक्तिः कथने चारुशीलता ।
सञ्चरते सुधाराशिर्धनिकस्य मुखे सदा ॥५२॥

क्षणे क्षणे नवं रूपं धनिकस्यैव जायते ।
नवं नवं रूपं पश्य दरिद्रो दहनायते ॥५३॥

अधुना धनपूर्णा ये सर्वे ते साधयन्तीह ।
दरिद्राणां स्थलं कुत्र क्षेत्रे मार्गेऽथवा भूमौ ॥५४॥

कोऽपि न पश्यति तस्य दरिद्रस्यैव चिन्तनम् ।
दर्शयति न तं कोऽपि तस्य सुखस्य कारणम् ॥५५॥

सर्वे धनस्य नो दासा धनं सर्वस्य च प्रभुः ।
चराचरेऽत्र संसारे धनं मायामयो विभुः ॥५६॥

पुत्रवत् पालयेद् वित्तं मित्रवल्लालयेत् पुनः ।
आदर्शवचनेन किं धनेऽस्ति जीवजीवनम् ॥५७॥

जीवति सकलं यत्र तत्र सुखवनं धनम् ।
प्राप्नोति परमं लाभं स्थानस्य कारणं धनम् ॥५८॥

धनस्य शीतले देहे दहनं हि निमज्जति ।
स्वतरुद्भवति ज्योतिपुनश्च प्राणसंकुले ॥५९॥

विलापस्य मले वित्तं कलापस्य तलेऽपि तत् ।
धनं सदैव सर्वत्र विलसति पुरे पुरे ॥६०॥

चित्ते तथापि नोदेति धनाय स्नेहभावना ।
किं लभ्यमिह संसारे भोगेन विभवेन वा ॥६१॥

भोगा विषधराः सर्पा रोगाणाञ्च सहायकाः ।
नश्यन्ति ते क्षणेनैव नाशयन्ति च जीवनम् ॥६२॥

विलासे वसते दुःखं विनाशस्य पुरन्दरः ।
विनाशस्य बीजं सूक्ष्मं विलासे वर्धते चिरम् ॥६३॥

अशान्तिर्वर्धते यत्र नश्यति प्राणसन्ततिः ।
अन्ते तत्र महागर्ते पतङ्गः पतति व्रती ॥६४॥

तत्र न धनवान् कोऽपि कोऽपि धनहीनो जनः ।
धनेन बलवान् तत्र नैव भवति मोहनः ॥६५॥

हस्ते भवतु वा वित्तमथवा कोषमन्दिरे ।
किं तेन जीवनं यत्र प्रविशतीह कन्दरे ॥६६॥

कन्दरं हि कदाकारं सागर इव गम्भीरम् ।
तत्र धनस्य किं कार्यं धनं भवतु सुन्दरम् ॥६७॥

धनायात्र रणं सर्वं पारायणं प्रतिक्षणम् ।
आलोकेऽस्मिन्रूपं तस्य नवं नवं प्रतिक्षणम् ॥६८॥

सर्वेषां हि धनं मित्रं कृपणानां न केवलम् ।
कामयन्ते जनाः सर्वे किन्तु निन्दन्ति तद् धनम् ।।६९ ।।

धनाय यतते कोऽपि कोऽपि धावति भूतले ।
धनार्थं जीवनं कोऽपि ददाति दुःखकातरः ।।७०।।

धनाय धारणं कोऽपि करोति तिलकं नवम् ।
शिखां धारयते कोऽपि परिधत्ते न भूषणम् ।।७१ ।।

धनाय यातना कुत्र कुत्र धनाय योजना ।
शास्त्राणां मन्थनं कुत्र भिन्ना च कुत्र साधना ।।७२ ।।

प्रविशन्ति धनार्थं हि सुजना रोगमन्दिरम् ।
चाटुवाक्यैः शतै लोकाः कुर्वन्ति पादवन्दनम् ।।७३।।

मालामर्पयति कोऽपि दुष्टः शिष्टं धनाय च ।
पतन् पादतले कोऽपि करोति धूलिधारणम् ।।७४ ।।

प्रतीक्षते विना दुःखं धनार्थं कोऽपि सुन्दरः ।
वकवत् पश्यति कोऽपि दुःखाग्निदग्धकातरः ।।७५ ।।

धनायात्र क्षणे भूमौ भवति समरो महान् ।
कस्मै न रोचते विश्वे धनामृतं सुखावहम् ।।७६ ।।

वद धनं विना कुत्र चलति जनजीवनम् ।
वद स्थानं कदा कुत्र धनस्य न प्रयोजनम् ।।७७ ।।

न कोऽपि भूतलेऽस्तीह यस्य न धनभावना ।
धनं धारयते सर्वं धनेन याति यातना ॥७८॥

धनं वृन्दावनं रम्यं धनं सुखस्य निर्झरः ।
धनेन धूमिलं सर्वं धरातले चराचरम् ॥७९॥

धनं मानाय न किन्तु ज्ञानाय काम्यते धनम् ।
पानायापि धनं काम्यं धनं विना मनो वनम् ॥८०॥

धनं मन्त्रो धनं तन्त्रं धनं यन्त्रं च नूतनम् ।
धनं गृहविडालस्य मुक्तं वातायनोपमम् ॥८१॥

धनेन भूयते सभ्यो मुहूर्तेऽपि वनेचरः ।
धनबलेन चायाति स्वगेहं सुखसागरः ॥८२॥

असीमा विद्यते शक्तिर्या पुनर्नित्यनूतना ।
अस्य महासमुद्रस्य धनं तरङ्गवासना ॥८३॥

यानं चलति किं बन्धो मार्गेऽस्मिन् सुमनोहरे ।
अस्ति धनं विना शान्तिः परिवारेऽपि किं सखे ॥८४॥

किं गेहे भोजनं बन्धो भवतीह धनं विना ।
औषधं किं समायाति स्वतो गेहं धनं विना ॥८५॥

कुत्र किं साधना जाता धनं विना कदाचन ।
तपस्या किं कदा पूर्णा धनं विनैव मोहन ॥८६॥

उदरार्थं धनं काम्यं सोदरार्थं धनं सखे ।
धनमावश्यकं नित्यं परिवारस्य शान्तये ॥८७॥

अहं तु ज्योतिषाचार्यः सर्वविद्याविशारदः ।
पूजयामि महालक्ष्मीं तस्यां भक्तिः सुनिश्चला ॥८८॥

यदि न चञ्चला स्थिरा विद्या वृथा ममैव च ।
कलावर्थकरी विद्या केवलं ज्योतिषे सुखम् ॥८९॥

अधुना वास्तुविद्या च सर्वमङ्गलकारिणी ।
वस्तूनां संग्रहार्थं सा सर्वदैव सहायिनी ॥९०॥

कलौ महत्त्वपूर्णा सा सर्वसुखप्रदायिनी ।
अत्र वस्तुप्रिया लोका सा विद्या भवतारिणी ॥९१॥

अस्माकं सभ्यतां पश्य याधुना वस्तुकैन्द्रिकी ।
भवति वस्तुना मात्रं मूल्याङ्कनं जनस्य ह ॥९२॥

नास्ति यदि गृहे वस्तु त्वमधमो वनेचरः ।
असंस्कृतस्त्वमेवात्र निन्दितो भूमिप्रस्तरः ॥९३॥

हे कोकिल त्यज न्यायं प्रियां च काव्यकौमुदीम् ।
नेत्रमुन्मीलय बन्धो पश्य त्वं सभ्यतानदीम् ॥९४॥

भावस्य वैभवं सर्वमभावस्य च रौरवम् ।
भावो ददाति संसारे सुखं सनातनं नवम् ॥९५॥

धनं मूल्यहीनं नैव सर्वेषां प्रीतिवर्धकम् ।
धनं सुधा धनं सारो धनं मोहस्य मोदकम् ॥९६॥

गर्जन्ति भूतले पश्य धनबलेन कुक्कुराः ।
पीडयन्ति परस्त्रियं धनशक्त्या निशाचराः ॥९७॥

तिरस्कृता च सा विद्या याद्य न धनदायिनी ।
किं नावहेलिता पत्नी नाद्य या धनधारिणी ॥९८॥

पुत्रस्तिरस्कृतो योऽत्र न धनोपार्जने क्षमः ।
धनाय हृदये प्रेम कण्ठे श्रीरामकीर्तनम् ॥९९॥

धनं कामयते नेता दाता कामयते धनम् ।
धनाभावेन सन्यासी गच्छति निर्जनं वनम् ॥१००॥

क्रन्दति दुःखसन्तप्तो धनाभावेन भिक्षुकः ।
शिक्षां दातुं न वै शक्तो धनाभावेन शिक्षकः ॥१०१॥

शिक्षणं धनसंयुक्तं शिक्षा दासी धनस्य च।
शिक्षानीतिर्धनैर्बद्धा विद्यार्थिनां च का कथा ॥१०२॥

यत्र धनं जनास्तत्र सर्वास्तत्रैव योजनाः ।
सर्वा विचारणास्तत्र तत्रैव नवचेतनाः ॥१०३॥

धनं विना जनो मात्रं जलं विना यथा सरः ।
न तं पश्यति मार्गे तु कदा कोऽपि ह कुक्कुरः ॥१०४॥

धनमावश्यकं गेहे धनमावश्यकं भूमौ ।
जीवनार्थं धनं काम्यं धनं सुखस्य कारणम् ॥१०५॥

तस्माद् धनायनं रम्यं काव्यमित्यभिधीयते ।
विरचितं श्रीरवीन्द्रकवीन्द्रेण युगे नवे ॥१०६॥

प्रियं भवतु सर्वेषां काव्यं धनायनं मम ।
सर्वं मिथ्या धनं सत्यमिति विचारो विभ्रमः ॥१०७॥

इति रवीन्द्रकुमारपण्डाकविना विरचितं
'धनायनं' शतककाव्यं समाप्तम्

******

९.

# मनुष्यरूपेण मृगाश्चरन्ति

येषां न विद्याध्ययनेऽनुरागो
न साधुकार्येऽपि च संप्रवृत्तिः ।
ते मृत्युलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥१॥

येषां न शीलं न च साधुभावो
न न्यायमार्गे गमनाभिलाषा ।
ते मृत्युलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥२॥

येषां न शान्तिर्न च बन्धुभावः
ये यत्नशीलाः परपीडनाय ।
ते मृत्युलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥३॥

येषां न नीतिनियमेषु निष्ठा
लाभाय येषां सकला प्रयत्नाः ।
ते मृत्युलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥४॥

लाभाय युक्ताः सततं नरा ये
ये सन्ति स्वार्थाय प्रयत्नशीलाः ।
ते मृत्युलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥५॥

येषां न दाने न च साधनायां
सच्चिन्तने वात्र कदा विलासाः ।
ते मृत्युलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥६॥

श्रद्धा न सत्ये न च शान्तिमार्गे
येषां प्रवृत्तिः प्रचुरा हि भोगे ।
ते मृत्युलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥७॥

रवीन्द्रकुमारपण्डाकविना विरचितं 'मनुष्यरूपेण मृगाश्चरन्ती'ति काव्यं समाप्तम् ।

******

# १०.

# संसारशतकम्

नमामि शिरसा शान्तं सुन्दरं सुमनोहरम् ।
स्मरामि तं सदा चित्ते सौम्यमानन्दकन्दरम् ॥१॥

बन्धनस्य मलेऽस्ति यो क्रन्दनसंकुलेऽपिच ।
अन्धस्य नयने योऽस्ति चले मनस्तलेऽपि सः ॥२॥

संसारस्य महाजाले पातयति विनिश्चलः ।
यस्य क्रीडारसस्निग्धः कालश्चात्रैव चञ्चलः ॥३॥

यश्चालयति मां भूमौ पाययति रसं सुखम् ।
यो हासयति मामत्र वन्दे तं कालकन्दुकम् ॥४॥

कान्तारे क्रन्दनं कुत्र प्रान्तरे कुत्र चन्दनम् ।
स्मरति कृपणः कुत्र चिन्तातुरो धनं धनम् ॥५॥

संसारेऽस्मिन् सुखं कुत्र कुत्र दुःखं प्रतिक्षणम् ।
विषं पिबति कोऽप्यत्र कोऽपि रसं कदा क्षणम् ॥६॥

संसारेऽस्मिन् सुधा कुत्र कुत्र विषं भयावहम् ।
कुत्र व्यथामयी चिन्ता कुत्र शान्तिमयं सुखम् ॥७॥

मोहस्य मूर्च्छना कुत्र कुत्र गेहस्य गौरवम् ।
क्षयस्य यातना कुत्र कुत्र जयस्य वैभवम् ॥८॥

संसारोऽयं महागर्तः पतनं दुःखदायकम् ।
पतङ्गस्य गतिर्नान्या यत्र चास्ति हुताशनः ॥९॥

हंसस्य हसनं कुत्र कुत्र ध्वंसस्य नर्तनम् ।
कंसस्य करुणा कुत्र कुत्र वंशस्य ध्वंसनम् ॥१०॥

सर्वं चित्रमयं भाति विभाति भास्करो यदा ।
घनान्धकारच्छायायां किञ्चिन्न दृश्यते कदा ॥११॥

पाययति कदा राधा तस्या रूपस्य माधुरीम् ।
कदा क्रोधाग्निसंलग्ना दृश्यते सा यथा दरीः ॥१२॥

कुत्र चित्रं स्वयं भाति सूत्रं निर्गलति स्वतः ।
सर्वमस्ति तथा किन्तु चलति नैव नो रथः ॥१३॥

कुत्र काकः ककां कृत्वा सभामध्ये सुपण्डितः ।
तिष्ठतीह तथा शान्तः पिकश्चैव वृथा भीतः ॥१४॥

निर्गलति कदा तारा कदा धारा भयप्रदा ।
तीव्रसंसारसंग्रामे ज्वलति जीवनं कदा ॥१५॥

पतने यातना कुत्र कुत्र सन्तरणेऽपि च ।
समुत्थानस्य संग्रामे कालश्चलति सर्वदा ॥१६॥

मरणस्य भयं कुत्र कुत्र सन्तरणस्य च ।
चरणस्य सुखं कुत्र सर्वत्र गर्तमेव च ॥१७॥

संसारे जायते वस्तु ततः पुनर्विनश्यति ।
जननाज्जायते सौख्यं दुःखं यदा विनश्यति ॥१८॥

किमिह सुन्दरं वस्तु किमसुन्दरमेव वा ।
शिवो यथात्र संसारे तथैव सरला शिवा ॥१९॥

क्लेदयन्ति शरीराणि रोगा भोगविलासिणः ।
धावति शरीरं कुत्र कुत्र प्रधावति मनः ॥२०॥

दुःखमत्र महाव्याधिः सुखमत्रैव चञ्चलम् ।
संसारेऽस्मिश्चलं सर्वं यथा तत्त्वं तथा मलम् ॥२१॥

कुत्र शाखा सदा शुष्का पादपः कुत्र लण्डितः ।
कुत्र धनं विना दुःखी ज्ञानी मानी सुपण्डितः ॥२२॥

मलं कुत्र जलं याति जलं याति रसातलम् ।
फलं पिबति पुष्पस्य सानन्दं सौरभं चलम् ॥२३॥

कुत्र भिक्षा विना शिक्षां कुत्र दीक्षा नवा नवा ।
कुत्र शिवः स्वयं जाले क्रन्दति सरला शिवा ॥२४॥

कुत्र नारी महामाया कुत्र नारी च चण्डिका ।
कराला कुत्र सा काली भयंकरी विभीषिका ॥२५॥

कुत्र राजा स्वयं रङ्कः कुत्र पङ्के च पङ्कजम् ।
कुत्र विभूतिरूपेण मिलतीह चलं रजः ॥२६॥

कुत्र यातना दैन्यश्च कुत्र सौख्यस्य ताण्डवः ।
भ्रमति कानने कुत्र विना दोषं च पाण्डवः ॥२७॥

खाण्डवदहनं कुत्र कुत्र चण्डविमर्दनम् ।
कुत्र सूर्यः प्रभापूर्णः कुत्र दुःखस्य दुर्दिनम् ॥२८॥

कुत्र नभो महाशून्यं कुत्र नभश्च शोभनम् ।
कुत्र क्रोधस्य कालाग्निः कुत्र स्नेहस्य चुम्बनम् ॥२९॥

कुत्र काकस्य 'का' शब्दाः कुत्र पिकस्य सङ्गीतम् ।
कुत्र भेकस्य भे नादः कुत्र यन्त्रस्य भाषितम् ॥३०॥

गङ्गा प्रदूषिता कुत्र कुत्र शुष्का च नर्मदा ।
नृत्यति नगरे कुत्र रसिका रूपनायिका ॥३१॥

कुत्र पुरस्कृता वेश्या कुत्र तिरस्कृता सती ।
पात्रं प्रीतिहीनं कुत्र संसारस्यैव का रीतिः ॥३२॥

कुत्र रथः स्वयं याति कुत्र याति न यातना ।
आगच्छति धनं कुत्र स्वयमेव श्रमं विना ॥३३॥

क्रन्दति द्रौपदी कुत्र कुत्र सीता विमर्दिता ।
पादपस्य मूले कुत्र शाखायां कुत्र वा लता ॥३४॥

कुत्र चौरो महाज्ञानी कुत्र चौरश्च दण्डितः ।
भण्डस्य कुत्र वा पूजा पण्डितश्चावहेलितः ॥३५॥

कुत्र भीरुर्महावीरः कुत्र भीमश्च शीतलः ।
कुत्र व्यथां समाप्नोति भीमकर्मा महाबलः ॥३६॥

कुत्र कालस्य कङ्काले क्रीडतीह च वायसः ।
पुष्करणीतटे कुत्र प्रतीक्षतेऽत्र सारसः ॥३७॥

क्रन्दति कुमुदं कुत्र विना स्नेहं सरोवरे ।
कुत्र ताडयते हंसः शिरो दुःखेन प्रस्तरे ॥३८॥

मले मालायते कस्य जीवनस्वप्नवल्लरी ।
विलुप्यते नले कस्य गोपपुरीह सुन्दरी ॥३९॥

नृत्यति मधुरं कस्य चित्तमयूरीह मदे ।
विहरति वने कस्य कालसर्पो भयप्रदे ॥४०॥

पानाय समरः कुत्र कुत्र गानाय गर्जनम् ।
मानाय योजना कुत्र कुत्र दानाय तर्जनम् ॥४१॥

कुत्र सर्पः स्वयं भुङ्क्ते नैजं शरीरजं विषम् ।
कुत्र त्यजतीह जन्तुर्जीवनं मधुरं रसम् ॥४२॥

कुत्र मोहस्य माधुर्यं कुत्र स्नेहस्य शृंखलम् ।
कुत्र पात्रं सदा शुष्कं शून्यमिव नभस्थलम् ॥४३॥

गर्जति रावणः कुत्र कुत्र दुःखी विभीषणः ।
कुत्र दुःशासनो दुस्थः स्वयं करोति रोदनम् ॥४४॥

कुत्र श्रीमन्दिरं शून्यं कुत्र मन्दिरे पूजनम् ।
कुत्र पुष्पं फलं तोयं कुत्र वा भूरिभोजनम् ॥४५॥

कुत्र नास्ति कदा भक्तिर्नास्ति कदा बतार्चनम् ।
न धूपं न च वै पुष्पं न सिन्दूरं न चन्दनम् ॥४६॥

पिबति गरलं कोऽपि स्नेहेन सुखचिन्तकः ।
गरलतो दूरे कोऽपि सांसारिको विचारकः ॥४७॥

चलति चञ्चलं कस्य मनोयानमहर्निशम् ।
चिन्तयति महाज्ञानी संसारोऽथ महाविषम् ॥४८॥

सुखलेशं न वै कुत्र दुःखपूर्णोऽत्र सागरः ।
नटति नटवन्मात्रं महामूर्खोऽत्र नागरः ॥४९॥

घटे शून्यं पटे शून्यं मठेऽपि सैव शून्यता ।
स्नेहस्य सदनं कुत्र कुत्र मरुस्थली मता ॥५०॥

महापात्रे जलं नास्ति पात्रे जलस्य सागरः ।
घटेऽस्ति गगनं कुत्र गगनं शून्यसागरः ॥५१॥

जलाय व्याकुला कुत्र कलशी दुःखकातरा ।
क्रन्दति सरसी कुत्र शुष्का जाता कथं धरा ॥५२॥

हसति लसति प्रेम्णा क्रन्दति निन्दति पुनः ।
संसाररङ्गमञ्चेऽस्मिन्नृत्यतीह क्षणं जनः ॥५३॥

आयाति यातना याति जीवनं चन्दनं कदा ।
कदा वृन्दावनं रम्यं कुरुक्षेत्रायितं कदा ॥५४॥

हसति कुसुमं कुत्र स्नेहरससमुत्सवे ।
संसारः सुन्दरः कुत्र कुत्र मन्दोदरः सखे ॥५५॥

कदा छाया कदा तापः कदा सुखस्य जाह्नवी ।
कदा दिगन्तकान्तारे विमुह्यति स्वयं रविः ॥५६॥

आकर्षति कदा कृष्णा चित्तं वित्तस्य वल्लरी ।
सृजति सा कदा चित्ते मोहस्यैव महाझरीम् ॥५७॥

कदा मोहे मनो मग्नं कदा भग्नं कुचिन्तनैः ।
कदा नग्नं तदेवात्र संसारे विपिने घने ॥५८॥

आलोकस्य कदा कुत्र सुन्दरशुभविभूतिः ।
कुत्र घनान्धकारस्य चतुर्पार्श्वे महाभीतिः ॥५९॥

रोगस्य गर्जनं कुत्र कुत्र रागस्य मूर्च्छना ।
मित्रस्य मरणं कुत्र कुत्र शत्रोः प्रतारणा ॥६०॥

कदा पीडा शरीरेऽस्मिन् कदा मनसि सा नवा ।
भावनाभुवने कुत्र प्रीतिः सुमधुरा शुभा ॥६१॥

कुत्र जलस्य चापल्यं कुत्र तिष्ठति शुष्कता ।
ज्ञानस्य वारिधिः कुत्र कुत्र मूर्खस्य मूर्खता ॥६२॥

खर्वस्य गर्जनं कुत्र विशालस्य च धीरता ।
अधीरो धावति कुत्र कुत्र धीरस्य च व्यथा ॥६३॥

गेहे कस्य सदा लक्ष्मीर्न सा चलति चञ्चला ।
सरस्वती सदा स्थिरा दुःखप्रदा कदा न सा ॥६४॥

कुत्र मरुस्थली कुत्र धरणी सस्यश्यामला ।
पुष्पाणां सौरभेणैव मरुस्थली रसोज्ज्वला ॥६५॥

भोगस्य वैभवं कुत्र कुत्र रोगस्य रौरवम् ।
खगस्य विपिनं कुत्र कुत्र स्थलं सदा नवम् ॥६६॥

धनं कस्य गृहे पूर्णं कुत्र शून्यं चिरन्तनम् ।
कोऽपि गच्छति श्मशानं कोऽप्यत्र गच्छति वनम् ॥६७॥

कोऽपि पालयते श्वानं कोऽपि स्तौति त्रिलोचनम् ।
जञ्जालजालसंलग्नः कोऽपि चलति काननम् ॥६८॥

कोऽपि मदमत्तश्चास्ति प्रमत्त इव कोऽपि वा ।
लोभासक्तो भुवि कोऽवा कामासक्तश्च कुत्र वा ॥६९॥

अन्धस्य बन्धनं कुत्र कुत्र बन्धेऽस्ति चन्दनम् ।
खाद्याभावः कदा कुत्र कुत्र वा भूरिभोजनम् ॥७०॥

कुत्र वातायनं मुक्तं कुत्र द्वारं निरन्तरम् ।
उन्मुक्तमिव वा कुत्र तिष्ठतीह निकेतनम् ॥७१॥

कुत्र न मन्दिरे शान्तिः कुत्र भ्रान्तिर्बलीयसी ।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ॥७२॥

कुत्र गेहं कुरुक्षेत्रं कुत्र स्नेहस्य सागरः ।
कुत्र सञ्चरते साधुः कुत्र नवो निशाचरः ॥७३॥

कदात्र हृदयं शून्यं कदा पूर्णमिव क्षणे ।
कोऽपि वीरत्वमाप्नोति कोऽपि वा म्रियते रणे ॥७४॥

कुत्र पतति वै पत्रं फलपुष्पविमण्डितम् ।
पश्यतीह तथा गर्तं नेतुं पत्रं नवं नवम् ॥७५॥

कुत्र भूमौ सदा शुष्को जलं विना सरोवरः ।
न पिबति जलं कोऽपि तथा तिष्ठति सागरः ॥७६॥

प्रान्तरे धर्षणं कुत्र कुत्र रामायणी कथा ।
कान्तारे जायते कुत्र नाना रसमयी व्यथा ॥७७॥

कुत्र मन्दाकिनी धारा कुत्र कामधेनुर्नवा ।
कुत्र स्वर्गसमा भूमिः कुत्र क्रन्दति वै शिवा ॥७८॥

शृगालो गर्जति भ्रान्तः कुत्र सिंहश्च निश्चलः ।
भग्नशिलातले कुत्र नित्यं क्रन्दति कोमलः ॥७९॥

पुष्पं पलायते कुत्र तिष्ठति वृद्धपादपः ।
कुत्र छायातले सुप्तो ज्ञानवाञ्जननायकः ॥८०॥

तृणं कुत्र जराजीर्णं पर्णं वेदयते व्यथाम् ।
संसारस्य विचित्रस्य को जानातीह सत्यताम् ॥८१॥

गर्तं कुत्र महाव्याप्तं कुत्र तद्वा प्रपूरितम् ।
स्नेहसिक्तं क्षतं कुत्र समाघातेन मर्दितम् ॥८२॥

जीवनं दुःखदं कुत्र कुत्र पर्णसमं सदा ।
वनमिव गृहं कुत्र वैकुण्ठमिव वा कदा ॥८३॥

कुत्र वृन्दावनं रम्यं कुत्र चन्दनपर्वतः ।
कुत्र कलरवो नित्यं जीवितुं मानवो भीतः ॥८४॥

कुत्र सङ्गेन वै नष्टः कुत्र सङ्गविवर्जितः ।
कुत्र पाषाणखण्डोऽपि देवरूपेण पूजितः ॥८५॥

कुत्र सुनिर्मला गङ्गा कुत्र सा मलधारिणी ।
कुत्र सत्यस्य छायायां क्रन्दतीह महामुनिः ॥८६॥

कदा कृष्णा नदी शुष्का कदा शुष्का सरस्वती ।
रङ्गमञ्चे कदा नास्ति विनोदायात्र नागरी ॥८७॥

अधरे पुलकं कुत्र कुत्र दारुणयन्त्रणा ।
अधरस्य सुधां पातुं कुत्र नाना कुमन्त्रणाः ॥८८॥

कुत्रास्ति भोजने स्वादं कुत्रास्ति भोजने विषम् ।
पीयूषं सुलभं कुत्र कुत्र दुर्लभमेव तत् ।।८६।।

द्रुमपूर्णं वनं कुत्र पर्णहीनश्च पादपः ।
हृदयकन्दरे कस्य लसति वासनातपः ।।९०।।

भवति ह रणं कुत्र कुत्र मरणमेव वा ।
सहसा धारणं कुत्र कुत्र निर्धारणा नवा ।।९१।।

चलति व्यसनं कुत्र कुत्र विलासवासना ।
कुत्र चिन्तानलैर्दग्धो मात्रं करोति शोचनाः ।।९२।।

चलति चञ्चला कुत्र प्रचलति परम्परा ।
कुत्र वैतरणी शुष्का कुत्र मन्दोदरी धरा ।।९३।।

कुत्र घने वने मेघः स्वयञ्च वृष्टिकातरः ।
कुत्र प्रतिक्षणं क्लान्तो निदाघेऽत्र सरोवरः ।।९४।।

कुत्र वृकोदरो भीमः कुत्र धर्मो युधिष्ठिरः ।
भ्रमति नगरे कुत्र विद्याहीनो वनेचरः ।।९५।।

सुन्दरीं लभते कुत्र कदाकारोऽत्र वानरः ।
अभावभावनायां हि कुत्र भ्रमति सुन्दरः ।।९६।।

रसालं जीवनं कुत्र कुत्र विषालमेव वा ।
रसालये नवं कुत्र देवालये विषं तथा ।।९७।।

संसारः सुन्दरः सत्यं चित्रमिव मनोहरः ।
महाभूमौ भ्रमत्यत्र यथा हरिस्तथा हरः ॥९८॥

आयाति च क्षणे याति ज्वरमेवात्र जीवनम् ।
संसारे वस्तु किं सारं न धनं न च यौवनम् ॥९९॥

सारमिह क्षणं मात्रं सारमिहैव जीवनम् ।
सारमिह यदस्त्यत्र मात्रं सन्तरणं क्षणम् ॥१००॥

रवीन्द्रकुमारपण्डाकविना विरचितं संसारशतकम्
काव्यं समाप्तम् ।

सुरभारतीपत्रिकायां
प्रकाशितम् ।

******

# ११.

# संसारगीतिका

वन्दे तां परमाराध्यां चेतनां भावमञ्जुलाम् ।
चञ्चलां प्रतिभां रम्यां मधुरां रसकोमलाम् ॥१॥

यद्यपि हृदये नास्ति काचिद् भावसरस्वती ।
तथापि कथयामि तां चित्तसन्तापसन्ततिम् ॥२॥

सागरे लहरीमाला खेलतीह स्वलीलया ।
स्पृशति चपलो वातश्चेतनां नवलीलया ॥३॥

मुखं कामयते वक्तुं सत्यं सारस्वतं शुभम् ।
नेत्रे कामयेते द्रष्टुं सुन्दरं मधुरं नवम् ॥४॥

श्रोतुं सुधासमं शास्त्रं प्रतिक्षणं पुरातनम् ।
कामयेते सदा कर्णौ विहाय विषकाननम् ॥५॥

गातुं वैदिकमन्त्रांश्च यन्त्रयुगे द्विधां विना ।
काठिन्यं न क्वचित् कण्ठे कुण्ठाकुला न चेतना ॥६॥

धनं न जीवने सर्वं तत्तु जीवनसाधनम् ।
किन्तु प्रतिदिशं पश्य धावतीह स्थले मीनः ॥७॥

गगने शून्यता सत्यं पवने न कदाचन ।
पारयति न तद् बोद्धुं मन्दबुद्धिस्तु मोहनः ॥८॥

दर्पं दर्शयते दुष्टः सभामध्ये दुःशासनः ।
नाट्यं पश्यति सानन्दं सर्वमत्रैव मोहनः ॥९॥

क्रीडति कुटिलः कालो गलति जीवचेतना ।
अभावभावनामध्येऽवमानिताः सदा जनाः ॥१०॥

क्वचित् पातुं जलं नास्ति क्वचिद् हलाहलं जलम् ।
क्वचिन्नले जलं नास्ति जलस्य केवलं मलम् ॥११॥

क्वचिद् भोक्तुं न वै खाद्यं मद्यं किन्तु निरन्तरम् ।
सुलभं सकले स्थाने कोणे कोणे प्रतिक्षणम् ॥१२॥

पश्यति रोटिकां कोऽत्र कात्र पश्यति शाटिकाम् ।
वाटिकायां मनः कस्य कोऽत्र पश्यति नाटिकाम् ॥१३॥

संसारो विषवृक्षो वा आहोस्विद् दुःखवारिधिः ।
किमिदं यातनागेहं शोकस्य वा महानदी ॥१४॥

कोऽपि विलपति प्रेम्णा कोऽत्र प्रलपति वृथा ।
कोऽपि कथयति क्रूरां संसारस्य व्यथाकथाम् ॥१५॥

संसारोऽस्ति रङ्गभूमिर्नानारूपवती यथा ।
क्षणे क्षणे नवं रूपं योषा धारयते तथा ॥१६॥

धनाय धावनं कस्य कस्य मानाय धावनम् ।
प्रतीयते कदाचिच्च संसारोऽथ महावनम् ॥१७॥

क्रीडति चपलः कश्चित् कश्चिज्ज्वलति वाऽनलैः ।
प्राप्नोति पीडनं कश्चित् संसारेऽस्मिन्महार्णवे ॥१८॥

अटति कीटवत् कश्चित् कश्चिद् वटतले व्रती ।
चटति नटवत् कश्चित् परम्परां प्रथां रीतिम् ॥१९॥

क्वचिज्जलमलं पीत्वा म्रियतेऽत्र महाबली ।
क्वचिज्जलं विना शुष्का स्वभावकोमला कलिः ॥२०॥

रवीन्द्रकुमारपण्डाकविना विरचिता 'संसारगीतिका'
समाप्ता

उषतीपत्रिकायां
प्रकाशितम्

******

# १२.

# कार्गिलम्

वन्दे शिवं मधुरमङ्गलमुग्धमूर्तिं
सर्गस्थितिप्रलयकारणकार्यरूपम् ।
दीनार्त्तदु:खतटिनीतटसेतुबन्धं
मोहान्धकारकलिकालकलाविलासम् ॥१॥

वन्दे शिवां शिवशरीरसमस्तशक्तिं
भक्त्या जगद्धितमतीं मदमोहहन्त्रीम् ।
काले करालसमये शुभमङ्गलाय
वन्देऽत्र मे जननभूजननीं सभक्ति ॥२॥

नमामि भक्त्या परमं सदाशिवं
भजामि देवीं परमेश्वरीं शिवाम् ।
स्मरामि रामं भवभीतिनाशकं
विनाशकं भीषणदुःखदाहकम् ॥३॥

काव्यं करोमि सरलं सुखदानहेतोः
संवर्णनाय नवभारतवीरकीर्तिम् ।
यैः सैनिकैः निजसुखं परिहाय प्रेम्णा
दत्तानि जीवनधनानि धराजनन्यै ॥४॥

ते वीरविज्ञपुरुषाः कथयन्ति लोका-
स्ते शान्तशीतलधरातलसूर्यकल्पाः ।
ते शाश्वता दशरथा निजदेशभूमौ
प्राणान् विहाय विलसन्ति विशालनाके ॥५॥

तेषां कृतिं प्रथयितुं प्रणयाकुलं मे
चित्तं करोति कठिनान् विविधान्प्रयत्नान् ।
तेषां पवित्रमथ संस्कृतधर्मकार्यं
देशे प्रसारयितुमेव मम प्रयत्नः ॥६॥

जानन्ति यद्यपि कथां विविधानुदन्तान्
लोका विचारकुशला विबुधा वरेण्याः ।
दृष्टाः श्रुताश्च सकला नवभोगयन्त्रैः
काव्यं करोमि च तथापि सुखाय मात्रम् ॥७॥

नित्यं प्रजीवतु सनातनसत्यकीर्तिः
संवर्धतां प्रतिपदं भुवि देशभक्तिः ।
पूज्या सदैव भवतु मम देशमाता
शान्ता स्वदेशजननी जननीसमा या ॥८॥

देशेऽद्य शक्तिः शुभभक्तिभावा
वीराग्रगण्याः पुरुषा महान्तः ।
न धर्मनीतिः शिथिलाऽस्ति देशे
कथं भवेदेव पराभवो नः ॥९॥

आयाति यातीह सदा विपत्ति-
र्धीराश्च धैर्येण सदा रमन्ते ।
स्वतः स्वकाले गलतीह दुःखं
तथापि चिन्ता गिलतीव चित्तम् ॥१०॥

विनाशकानाञ्च विनाशभीत्या
भयंकराणां भयभावरीत्या ।
जनाश्च देशे नवरोगदग्धा-
श्चिन्ताजडास्ते विचरन्ति शान्ताः ॥११॥

भवत्यहो किं घटनं प्रचण्डं
नश्यत्यहो भारतभूषणश्रीः ।
चण्डाः प्रचण्डाश्च बलेन भूमिं
विदारयिष्यन्ति च कौशलेन ॥१२॥

भयेन भूमिश्च सदा प्रतप्ता
तथापि भीता निवसन्ति लोकाः ।
स्थानेऽद्य यस्मिन् विचरन्ति भीमा
विनाशनार्थं मम देशभूम्याः ॥१३॥

काश्मीरराज्ये सुलभा न शान्तिः
स्थाने प्रधाने विलसन्ति दुष्टाः ।
शिष्टाः समस्ताश्च भयेन यत्र
दिवानिशं कातरभावमग्नाः ॥१४॥

संप्रार्थयामो जगदीश रक्ष
रक्षस्व नित्यं मम देशभूमिम् ।
विनाशकानां वस कण्ठदेशे
तेऽधर्ममार्गाद् विरमन्तु शीघ्रम् ॥१५॥

हिंसातुराणां न च काऽपि भीति-
रियं हि तेषां चलनस्य रीतिः ।
भवन्ति भीत्या सरला विनम्रा
युद्धस्य नीतौ न च ये सुदक्षाः ॥१६॥

नेच्छन्ति युद्धाय च शान्तचित्ता
न न्यायमार्गे चलितुं ह शक्ताः ।
असत्यरीत्या हरणाय भीता-
स्ते भारतीया बलिनो भवन्ति ॥१७॥

अधुना धरणी जननी विकला
परपीडनदुःखमयी सरला ।
रुदतीव सखे हृदये तरले
वदतीव नवं करुणं व्यथनम् ॥१८॥

नगरे नगरे गगने पवने
चलतीह कथा वहतीह वने ।
जननी दयनीयदशाविवशा
समये वद हे वद कस्य फलम् ॥१९॥

दहनं दहतीह मनः सततं
शरणं वद कस्य सखे समये ।
करणीयमिहास्ति सखे किमिदं
नयने नयने नवदुःखलिपिः ॥२०॥

दिवसे दिवसे घटना जटिला
शयने सततं भयदा चपला ।
मम भारतमातुरनन्तनिधेः
परिरक्षणमेव सदा भवतात् ॥२१॥

सर्वदा भारता माता वीरमातेति कथ्यते ।
वीराणां जननी यस्मात्तस्मादेव गरीयसी ॥२२॥

अस्माकं भारता भूमिर्वीरभूमिः प्रगीयते ।
वसन्ति सुतरां स्नेहाद् देशेऽस्मिन् भारते सुराः ॥२३॥

असुराणां विनाशाय सर्वदा वीरपुङ्गवैः ।
स्वजीवनानि दत्तानि विना द्विधां सगौरवम् ॥२४॥

विजयेन विना का श्रीर्विजयेन विनात्र किम् ।
गौरवं भारतीयानामहिंसाव्रतधारिणाम् ॥२५॥

अस्माकं भारतीयानां धर्मशक्तिः समुज्ज्वला ।
धर्मस्य विजयोऽवश्यं भविष्यत्यैव भारते ॥२६॥

मूले तिष्ठति धर्मस्य सत्यं सनातनं सुखम् ।
सत्ये संतिष्ठते सर्वं भुवनं सचराचरम् ॥२७॥

सत्यस्य स्थापना युक्ता सत्यस्य परिरक्षणम् ।
अवश्यं करणीयं तत् प्रकारैर्विविधैर्नवैः ॥२८॥

असत्यमन्यथा स्याच्च भूत्वा सत्यायितं भुवि ।
अनुजा विनष्यन्ति नो दुःखिताः पीडिताश्च तैः ॥२९॥

अस्माकं यास्यति भूमिर्यास्यति दीर्घगौरवम् ।
कथयिष्यन्ति ते दुष्टा वयं हि प्राणकातराः ॥३०॥

परन्तु तेषां सकला प्रकल्पना
कदापि भूमौ न सखे फलिष्यति ।
असत्यमार्गे रिपवो विनाशकाः
प्रयासबद्धाः सततं भवन्तु ते ॥३१॥

सत्यस्य मार्गे विचरन्ति ये नरा
ये धर्मनीतौ च सदाऽभिलाषिणः ।
इच्छन्ति सानन्दमिह स्वजीवनं
हिताय देशस्य च ते सुपूजिताः ॥३२॥

अस्माकं पुरुषा वीरा न युद्धभयकातराः ।
जीवनानि जलीकृत्य युद्धरताश्च सैनिकाः ॥३३॥

सगर्भां सरलां पत्नीं सुपुत्रं प्रियसोदरम् ।
परिवारं परित्यज्य संग्रामभूमिवेष्टिताः ॥३४॥

अजय आहुजा वीरो जीवनं दत्तवान् वरः ।
संरक्षितुं स्वदेशस्य गौरवं नवसंकटे ॥३५॥

नचिकेता तथा वीरः शार्दूलो रणनायकः ।
विनाशाय च शत्रूणां प्रविष्टः सङ्कटस्थले ॥३६॥

सत्यस्य सरणं कृत्वा ते सर्वे वीरपुङ्गवाः ।
अर्पयन्ति रणे पश्य जीवनानि विचक्षणाः ॥३७॥

देशेऽद्य दुःखेन चरन्ति मानवा
विनाशचिन्ता प्रबला मनस्तले ।
सर्वत्र दुःखस्य करालकालिका
विनाशनाय भ्रमतीव भूतले ॥३८॥

भयेन युद्धस्य प्रकम्पिता मही
प्रकम्पते वै हृदयं प्रतिक्षणम् ।
किमद्य जातं सहसा कुचिन्तया
दिनानि यास्यन्ति सुचिन्तया विना ॥३९॥

विनाशमार्गे गमनाय तत्परा
विचारहीना रिपवो भयङ्कराः ।
देशस्य हानेश्च न चिन्तने क्षमा
ते भ्रान्तिभूमौ विचरन्ति केवलम् ॥४०॥

कलेन वा कौशलकारणेन वा
छलेन कूटेन बलेन वा पुनः ।
बहुप्रकारैः समाराभिलाषिणः
प्रयत्नयुक्ता रिपवो विचक्षणाः ॥४१॥

अनेके सैनिकास्तत्र प्राणस्नेहविवर्जिताः ।
विलुप्ताः कुत्र भूखण्डे देशसेवापरायणाः ॥४२॥

किं वा प्रपीडितास्सन्ति पाकिस्थानिकसैनिकैः ।
किमुत मारितास्सन्ति सत्यं कः कथयिष्यति ॥४३॥

जेनेभाविधिमुल्लङ्घ्य पाकिस्थानस्य सैनिकाः ।
अस्माकं वीरपुत्राणां क्रीडन्ति वपुभिः सह ॥४४॥

किं वा ते बन्दिनस्सन्ति कारागारेषु कुत्रचित् ।
किं तेषामस्थिमांसादिर्मिश्रिता मृत्तिकारसैः ॥४५॥

अथवा तेऽमृता जाता मारयित्वा च राक्षसान् ।
शरीराणि प्रक्षिप्तानि मृत्योश्च नवगह्वरे ॥४६॥

ते गताः सकले स्वर्गं कीर्तिस्तेषाञ्च जीवति ।
जीविष्यति चिरं लोके यावच्चन्द्रदिवाकरौ ॥४७॥

म्रियन्ते मानवाः सत्यं मरणं नियतं भुवि ।
संसारे मरणं सत्यमसत्यं सकलं चलम् ॥४८॥

मरणं वासनोच्छेदो मरणं मोहनिवृत्तिः ।
म्रियन्ते देशसेवायां येऽद्य ते पुरुषोत्तमाः ॥४९॥

दुःखस्य विषयश्चात्र देशेऽद्य जनता स्थिरा ।
केवलं शृणोति सर्वं चित्राणि पश्यति वृथा ॥५०॥

देशेऽद्य भीषणो वह्निरशान्तिर्दुःखमेव च ।
कारणेन विना वीरा म्रियन्ते रणप्राङ्गणे ॥५१॥

न शङ्का विषयेऽस्माकं स्थानं नो धनमेव च ।
कारगिलीति यत्स्थानं प्रसिद्धं भारतावनौ ॥५२॥

कारगिल्यां वृथाऽद्यैव ज्वलति भीषणोऽनलः ।
तयैव चिन्तया दग्धाः समग्रा देशवासिनः ॥५३॥

सर्वत्र समरज्वाला सर्वत्रैव विभीषिका ।
न स्थानमस्ति कुत्र वा यत्राधुना न यन्त्रणा ॥५४॥

गेहेऽद्य भीषणा भीतिर्बहिरेव च सा स्थितिः ।
रसायनास्त्रगर्वेण हुंकारो भयकारणम् ॥५५॥

दिने दिने नवा चिन्ता कलुषीकरोति मनः ।
विहाय सकलं वस्तु कुत्र वा यास्यति जनः ॥५६॥

हिंसातुरा महाघोरा दाम्भिका मदमण्डिताः ।
विचारविमूढाः किञ्चिन्न पश्यन्तीह कर्कशाः ॥५७॥

चिन्ता हि केवलं तेषां स्वस्वार्थसिद्धिरेव च ।
तदर्थं सरणिस्तेषां रणमेवाद्य केवलम् ॥५८॥

दुःखं पीडयते चित्तं कारणेन विना वृथा ।
म्रियन्ते सैनिकाः श्रेष्ठा युवानो वीरविक्रमाः ॥५९॥

त एव पुरुषाः श्रेष्ठास्त एव देशरक्षकाः ।
त एव विक्रमादित्याः पुरुषत्वविभूषिताः ॥६०॥

अधुना भारता माता क्रन्दति भयसंकुला ।
ताडयन्ति च तां क्रूराः पाकिस्थानस्य सैनिकाः ॥६१॥

अधमाः शासकाः क्रूराः कठोरहृदया नराः ।
रसायनास्त्रगर्वेण गर्जन्ति नरकुक्कुराः ॥६२॥

ताडनाय न वै शक्तिर्न पीडनाय भारतम् ।
केवलमत्र तत्रैव सृजन्ति त्रासभावनाम् ॥६३॥

त्रासयन्ति महामूर्खाः सन्त्रासवादकौशलैः ।
अपहर्तुं धरां साध्वीं यतन्ते नरराक्षसाः ॥६४॥

नवीना कस्य वा पत्नी नवोढा प्रेयसी नवा ।
स्मरति स्वपतिं प्रेम्णा कारगिलनिवासिनम् ॥६५॥

सहसा विधवा जाता पत्नी प्रणयकाङ्क्षिणी ।
रोदिति सरला बाला निन्दन्ती भाग्यलेखनम् ॥६६॥

कस्य प्रियतमा तन्वी सगर्भा दुःखकातरा ।
कान्तस्य मरणं श्रुत्वा भग्नशीलेव कोमला ॥६७॥

तथापि सरला साध्वी सत्यं जानाति यद्यपि ।
कथयति यथारीत्याहं नु सौभाग्यशालिनी ॥६८॥

पतिर्मे परमो देवो देशस्यार्थे स्वजीवनम् ।
प्रदत्तं श्रद्धया तेन दुःखेन किं प्रयोजनम् ॥६९॥

सर्वत्र सर्वदिग्भागे रौद्रा दुःखस्य डाकिनी ।
अकाले कालिका घोरा भ्रमतीव भयंकरा ॥७०॥

जीवति ससुखं कुत्र पितामहो महाद्रुमः ।
गच्छति युवकः पुत्रो हा दुःखमद्य भारते ॥७१॥

क्रन्दति जनकः कुत्र पुत्रविच्छेदकारणात् ।
कुत्र वा कोमला माता स्वप्राणनाशकाङ्क्षिणी ॥७२॥

दृष्ट्वा चित्रपट्टं गेहे स्मरति कोमला कलिः ।
अधुना वद हे मातः क्व नु मे वर्त्तते पिता ॥७३॥

बालाया वचनं श्रुत्वा भयेन लोललोचना ।
बधिरा इव सा धीरा धैर्येण सह सादरम् ॥७४॥

कथयति च सा तन्वी तरङ्गहीननिश्चला ।
बाले तव पिता श्रेष्ठः गतवान् मन्दिरं प्रभोः ॥७५॥

बालिका चपला लोला पृच्छति कुत्र मन्दिरम् ।
अहमपि गमिष्यामि मिलितुं पितरं मम ॥७६॥

बोधयिष्यति किं माता दुःखिनी दुःखकातरा ।
याहि त्वमपि तत्स्थानं देशार्थं देहि जीवनम् ॥७७॥

मम तु सकलाः स्वप्ना विनष्टा देशकारणात् ।
अहमपि गमिष्यामि जीवनेन किमद्य मे ॥७८॥

अन्धस्य नश्यति यष्टिः पङ्गोश्च चरणद्वयम् ।
बन्धस्त्रुट्यति वा कस्य गम्भीरे दुःखसागरे ॥७९॥

प्रतीक्षाविकला माता ग्रामकोणे प्रतीक्षते ।
आयाष्यति ध्रुवं तस्यास्तनयो वीरविक्रमः ॥८०॥

प्रेषयिष्यति वा वित्तं रजःसंक्रान्तिरागता ।
अधीरा भगिनी भग्ना भ्रातुः पत्रञ्च नागतम् ॥८१॥

कस्य प्रणयिनी मुग्धा शोकाग्निदग्धमानसा ।
करोति व्रतसावित्रीं सत्यस्य रक्षणाय सा ॥८२॥

कुत्र वा मन्दरे माता प्रतिदिनं प्रयच्छति ।
कुसुमबिल्वपत्रादीन् भयार्द्रभक्तिमानसा ॥८३॥

करोति जननी कुत्र प्रतिमुहूर्तमेव सा ।
सुरक्षार्थञ्च पुत्राणामीश्वरनामकीर्तनम् ॥८४॥

त्वमेव मे पिता माता हे प्रभो परमेश्वर ।
सन्तानं रक्ष मे नित्यं कृपया वरदो भव ॥८५॥

पुत्रो मे करोति युद्धं ड्रासेऽद्य दुःखजर्जरः ।
भवानि त्वं सदा मातः समीपे भव तारिणी ॥८६॥

नश्यन्तु प्रबला विघ्नाः सकलाः प्रतिबन्धकाः ।
ये तिष्ठन्ति तदा सर्वे तस्य संग्रामकालिकाः ॥८७॥

हे मधुसूदन कंसाः प्रबलाश्चाद्य भारते ।
आगच्छ भूमिमागच्छ विनाशय च दुःशीलान् ॥८८॥

त्वमेव दुःखहर्तासि त्वमसि प्राणदायकः ।
त्वमेव जगतो नाथो भारतं रक्ष सर्वदा ॥८९॥

सैनिकानां सुमेधानां देशरक्षाव्रतात्मनाम् ।
त्वमेव साहसशक्ती देशस्य कुरु मङ्गलम् ॥९०॥

आगच्छतु स्थिरा शान्तिर्नश्यतु रणताण्डवः ।
भण्डा गच्छन्तु मद्देशात् प्रविष्टा ये च शत्रवः ॥९१॥

येषां कृते वयं नष्टा विनष्टाश्चाद्य भारते ।
हसन्ति प्रविशन्ति येऽस्माकं भारतभूतलम् ॥९२॥

कपटकुशला येऽत्र भेदबुद्धिपरायणाः ।
अस्माकं नाशमिच्छन्ति ते नश्यन्तु प्रतिक्षणम् ॥९३॥

अस्माकं वीरपुत्राणां विजयनादद्दुन्दुभिः ।
गगनं पवनं शून्यं प्रकम्पयतु मेदिनीम् ॥९४॥

हसतु धरणी माता सगर्वं चैव सर्वदा ।
वीरतनयलाभस्य कारणमिदमुत्तमम् ॥९५॥

अहिंसा परमो धर्मोऽहिंसा च परमं तपः ।
अहिंसा साधना श्रेष्ठा अहिंसा सुखसाधनम् ॥९६॥

हिंसा नाशयते प्रीतिं पारस्परिकमित्रताम् ।
ध्वंसयति च सा बुद्धिं प्रज्ञाविवेकशालिनीम् ॥९७॥

जीवहिंसा महापापमहिंसा सुखदायिनी ।
अहिंसासदृशी नीतिर्नास्त्येव विश्वभूतले ॥९८॥

हिंसायां म्रियते जीवोऽधोगतिश्चाथ हिंसने ।
अहिंसायां महाशान्तिः सुखानि निर्मलानि च ॥९९॥

हिंसा दशति व्यालीव हिंसा च दुःखकारणम् ।
हिंसायां नास्ति चानन्दः केवलं दुःखरौरवम् ॥१००॥

भोगस्य संगिनी हिंसा सा च रोगस्य नायिका ।
असत्यस्य मूले हिंसा या च कंसस्य कल्पना ॥१०१॥

अहिंसा जटिलं तथ्यं चाहिंसा सरला कला ।
अहिंसासदृशी शक्तिर्नास्ति नास्ति महीतले ॥१०२॥

नाशयति बलं रौद्रा वर्धयति च शत्रुताम् ।
मित्रता क्षीयते नित्यं हिंसया द्वेषशङ्कया ॥१०३॥

यदि सुखं विना हिंसां किम् ।
अहिंसास्त्रसहायेन मिलति सकलं यदि ॥१०४॥

अस्माकं वीरपुत्राणां मरणं दुःखदायकम् ।
किं करणीयमत्रैव शरणं जगदीश्वरः ॥१०५॥

यद्यपि सैनिका दक्षा म्रियन्ते चाधिकाः सदा ।
तथापि शासकास्तेषामाक्रमणाय चञ्चलाः ॥१०६॥

आक्रमणेन को लाभः किं फलं रणसर्जनैः ।
गौरवमस्ति किंवात्र को लाभस्त्रासवर्धनैः ॥१०७॥

निन्दन्ति सकले देशाः पाकिस्थानस्य दुर्नयम् ।
तथापि रणहुङ्काराश्चापल्यादेव केवलम् ॥१०८॥

पाकिस्थानं यथार्थेन त्रासवादीति कथ्यते ।
उल्लंघन्ति यथास्वार्थं यथेच्छं नियमांश्च ते ॥१०९॥

भारते प्रमुखा शक्तिर्दुर्गारूपेण संस्थिता ।
सरस्वती महाशक्तिर्बुद्धिरूपेण वर्त्तते ॥११०॥

प्रचण्डा चण्डिका नित्यं विलसत्येव भारते ।
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ॥१११॥

धर्मसंस्थापनार्थाय युगे युगे योगेश्वराः ।
आविर्भवन्ति दुष्काले संरक्षणाय भारतम् ॥११२॥

लसति भारते लक्ष्मीर्धनरूपेण सर्वदा ।
संरक्षिष्यति चावश्यं भारतं परपीडनात् ॥११३॥

महाकाली कराला या विद्यते भारतावनौ ।
महाशक्तिश्च सा देवी प्रमादं प्रहरिष्यति ॥११४॥

विनश्यतु धनं धान्यं जीवनं जनसम्पदाः ।
अवश्यं कार्यमस्माभिः शत्रूणां दर्पमर्दनम् ॥११५॥

नास्माकं विजये श्रद्धा नोल्लासः परपीडने ।
परन्तु विषवृक्षाणां कर्तव्यं मूलताडनम् ॥११६॥

विनष्टा यदि नो सर्पा विषवृक्षनिवासिनः ।
दशन्ति सुगमे काले दशनं हि स्वभावजम् ॥११७॥

दशनेन हि सन्तोषः सर्पाणामिह सर्वदा ।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ॥११८॥

मदमत्ताश्च ये मोहेनाज्ञानतमसातले ।
त्रासयन्ति सदा लोकान्दण्डनीया भवन्तु ते ॥११९॥

येषां नास्ति स्वयं प्रज्ञा ज्ञातुं न पारयन्ति ते ।
हिताहितविचाराश्च तेषां नायान्ति मानसम् ॥१२०॥

ते वीराः सततं पूज्या वरेण्या भीमविक्रमाः ।
सुखे दुःखे च ये स्थिरा देशस्य हितचिन्तकाः ॥१२१॥

सैनिकाः सकलं त्यक्त्वा रणप्राणपरायणाः ।
अन्यथा वद को मार्गो भारतं शत्रुसंकुलम् ॥१२२॥

पवित्रा भारता माता भविष्यति न खण्डिता ।
केवलं वीरपुत्राणां पराक्रमबलेन सा ॥१२३॥

सर्वेषु देवदेवीषु श्रेष्ठा स्वदेशमातृका ।
सर्वाग्रे पूजनीया सा सर्वदुःखविनाशिनी ॥१२४॥

धर्मेषु श्रेष्ठधर्मो हि मन्मते देशसेवनम् ।
देशसंरक्षणकार्यं कठिनं दुष्करं व्रतम् ॥१२५॥

विनष्टा नगरी बुरुः समृद्धा सस्यशालिनी ।
आक्रमणफलादेव श्मशानमिव भासते ॥१२६॥

सुन्दरी नगरी तन्वी याधुना ध्वंसताण्डवैः ।
विनष्टा वर्त्तते तत्र विधवेव हतप्रभा ॥१२७॥

तोपवृष्टिं सदा तत्र पाकिस्थानस्य सैनिकाः ।
कुर्वन्ति ध्वंसलीलायां प्रमत्ता मदविह्वलाः ॥१२८॥

नागरिकाश्च तां दृष्ट्वा हतप्राणा भवन्ति ते ।
पलायन्ते भयत्रस्ता विकला भग्नमानसाः ॥१२९॥

सकलं विकलं पश्य पलायनपरायणाः ।
तत्रत्या भारतीयाश्च क्लेशकष्टेन ताडिताः ॥१३०॥

इतस्ततः प्रधावन्ति वासाय भोजनाय च ।
शरणं कुत्र वा नेयं सर्वत्र कष्टयातना ॥१३१॥

भवन्ति खण्डिता नष्टा दुष्टानां दुष्टपीडनैः ।
अनुभवन्ति कष्टानि न त्यजन्ति च शिष्टताम् ।।१३२।।

न जीवनाय दुश्चिन्ता परिवारस्य वा कदा ।
न मित्रज्ञातिबन्धूनां चिन्ताज्वरेण पीडिताः ।।१३३।।

एकध्याने यथाशक्ति युयुत्सवश्च सैनिकाः ।
न चिन्तयन्ति संसारं संग्रामरक्तरञ्जिताः ।।१३४।।

न खाद्यं मिलति योग्यं न चावश्यकपानीयम् ।
न निद्रा न च वा स्वप्नाः केवलं शत्रुसैनिकाः ।।१३५।।

विहाय सकलं सौख्यमनाहारेण दुर्बलाः ।
विस्मृत्य मधुरं सर्वं संग्राममोदमानसाः ।।१३६।।

उपरि तपनस्तप्तस्तस्याधस्तप्तबालुका ।
सम्मुखे मरणो देवश्चतुर्पार्श्वे च सैनिकाः ।।१३७।।

पलायनाय न पन्थास्तेषां तत्रैव विद्यते ।
मरणं मारणं मात्रं सरणीयञ्च केवलम् ।।१३८।।

सम्मुखे माननीया नो जननी पुत्रवत्सला ।
असहाया स्थिरा देवी बलात्कारेण मर्दिता ।।१३९।।

करुणदुर्दशां तस्याः पश्यन्नेव च प्रस्तरः ।
क्रन्दिष्यति नूनं दुःखैः पुत्राणां वद का कथा ।।१४०।।

विलोक्य वैभवं भव्यं नव्यं भारतगौरवम् ।
ईर्ष्यापरायणाः सन्तः कुर्वन्ति युद्धधारणाम् ॥१४१॥

धनहानिर्महद्दुःखं जनहानिस्ततोऽधिकम् ।
कुफलं सर्वतो मात्रं युद्धेन किं प्रयोजनम् ॥१४२॥

दुर्बुद्धयो न पश्यन्ति हिताहितं शुभाशुभम् ।
प्रपातं नैव पश्यन्ति मधु पश्यन्ति केवलम् ॥१४३॥

तदर्थमिह नो मैत्री भावना बलवत्तरा ।
पारस्परिकबन्धुत्वं नैवास्ति देशयोर्द्वयोः ॥१४४॥

हितचिन्तास्ति नो यत्र नापि मङ्गलकामना ।
बन्धुभावः कथं जायेद्यत्र न सौख्यचिन्तनम् ॥१४५॥

येषाञ्च रक्तमांसेषु तादृशी हीनभावना ।
किं करिष्यन्ति ते मूर्खा देशस्याक्रमणं विना ॥१४६॥

भारतीया वयं सर्वे शान्तिमैत्रीप्रचारकाः ।
अहिंसा परमो धर्मनीतेश्च गायका वयम् ॥१४७॥

भारतीया वयं सर्वे शान्तिदूता विचारकाः ।
अस्माकं हृदये नास्ति संकीर्णा स्वार्थभावना ॥१४८॥

वयं न कुटिलाः क्रूराः प्रस्तरपांशुमानसाः ।
वयं न चाटुलाश्चौराः परस्थानापहारिणः ॥१४९॥

तस्मादस्तु शुभं नित्यं भारते प्रियभारते ।
सर्वेऽत्र सुखिनः सन्तु भयं विनैव भूतले ॥१५०॥

सामान्या घटना नास्ति विस्मर्तव्या भविष्यति ।
मानवस्येतिहासेऽपि कार्गिलं स्थास्यति चिरम् ॥१५१॥

वीराणां रक्तदानेन विमुक्ता या वसुन्धरा ।
तस्यां भूमौ सुरकीर्तिस्तिष्ठतु ह्यविनश्वरा ॥१५२॥

पण्डारवीन्द्रकविना लिखितं काव्यकार्गिलम् ।
वीराणां सैनिकानां नः कीर्तयितुं च गौरवम् ॥१५३॥

इति रवीन्द्रकुमारपण्डाकविना विरचितं
कार्गिलमिति खण्डकाव्यं समाप्तम्

******

'अर्वाचीनसंस्कृतम्' पत्रिकायां प्रकाशितम् ।

# १३.

# जलशोषः

अस्मिन्नेव महाघोरे काले सत्यं प्रतीयते ।
कथं जलं यथार्थेन जीवनमिति कथ्यते ॥१॥

जलं विना न वै सृष्टिर्जलं विना न जीवनम् ।
जलं विना न वै वृक्षो जलं विना न काननम् ॥२॥

जलं विना न सौन्दर्यं जलं विना न विभूतिः ।
जलं विनात्र वृक्षेषु फलन्ति न फलान्यपि ॥३॥

जलेन जीवति प्राणी जलं जीवस्य जीवनम् ।
जलं विना सखे पश्य हाहाकारस्य रोदनम् ॥४॥

स्थानात् स्थानान्तरं याति त्यक्त्वा निजनिकेतनम् ।
प्रतीयतेऽधुना सत्यं जलमेव महाधनम् ॥५॥

अभावे वस्तुनो मूल्यं ज्ञायते समये तदा ।
जलाभावेन क्रन्दन्ति धावन्ति च जना यदा ॥६॥

किं कर्तव्यविमूढास्ते पलायनपरायणाः ।
धावन्ति कीटतुल्यास्ते जीवितुमिह भूतले ॥७॥

जलं जलमिति स्मृत्वा क्रन्दन्ति च निराश्रयाः ।
निर्मान्ति योजनाः सर्वा यद्यपि ताः फलन्ति न ॥८॥

कुत्र महाप्रभोः प्रीतौ मन्दिरेषु पूजार्पणम् ।
कुत्र जलं विना नैव साध्यं जलस्य तर्पणम् ॥९॥

यज्ञस्यायोजनं कुत्र कुत्र भेकस्य नर्तनम् ।
कुत्र दैवभूमौ भक्त्या चलति नामकीर्तनम् ॥१०॥

जलाय व्यस्तता कुत्र कुत्र भीषणयन्त्रणा ।
कुत्र वा नगरीष्वेव विविधा नवमन्त्रणाः ॥११॥

विशाला योजना कुत्र कुत्र तीव्रविचारणाः ।
कुत्र महाभयेनैव प्राणत्यागस्य यन्त्रणा ॥१२॥

मरणस्य महाभीतिः कुत्र साक्षाद्विभीषणा ।
परिवारसुरक्षार्थं कुत्र धावनयन्त्रणा ॥१३॥

तथापि धावति चित्तं समायाति कुभावना ।
कुत्र पलायनमार्गे सन्ति नाना प्रतारणाः ॥१४॥

दहति दहनं सर्वान्मानवान् पशुपक्षिणः ।
करणीयं किमस्ति मे कालोऽयमतिदारुणः ॥१५॥

नगरे नगरे दुःखं ग्रामे ग्रामे भयावहम् ।
जलं विना कथं कार्यं भोजनं शयनादिकम् ॥१६॥

जलं विना सुखं कुत्र जलं विना क्क विभूतिः ।
क्क शान्तिः स्थिरता कुत्र किं वा कुत्र प्रसन्नता ।।१७।।

अग्निवर्षति स्थानेषु न वृष्टिर्न च तोयदाः ।
सर्वत्र भीषणा ज्वाला परिस्थितिर्भयप्रदा ।।१८।।

गगने पश्यति रौद्रो दयाहीनो विभाकरः ।
प्रचण्डषण्डरूपेण चाक्रमतीव भास्करः ।।१९।।

न केवलं धरा शुष्का शुष्का मानवचेतना ।
प्रकृतिसुन्दरी शुष्का पश्य कालविडम्बनाम् ।।२०।।

कलिः शुष्का नली शुष्का शुष्का सरसी शीतला ।
शुष्काः सरोवराश्चात्र पशवश्च व्यथाकुलाः ।।२१।।

दुःखनिष्पीडितप्राणाः स्वगेहे नवकोकिलाः ।
कठोरकालचक्रेण विच्छिन्ना सरलाश्च ये ।।२२।।

वदन्ति न भेकाः किञ्चिन्न शुका न च सारिकाः ।
कालक्रीडां हि पश्यन्ति विदग्धा मूकचातकाः ।।२३।।

गगनं दहनाकारं लोकाः शोकपरायणाः ।
युवानोऽपि निरुन्मादा बालाश्च भग्नचेतनाः ।।२४।।

धरणी धूम्रवर्णेयं पवनः कोपकर्कशः ।
मृतप्राया महामीनाश्चिन्तातुराश्च सारसाः ।।२५।।

सर्वेऽत्र दुःखिनो सन्ति भयभीता जनाः किल ।
मन्ये सर्वमधर्मस्य कलियुगेऽस्ति वै फलम् ॥२६॥

ददाति दूषणं दुःखं प्रदूषणं ततोऽधिकम् ।
सर्वमेव फलं लोके प्रदूषणस्य केवलम् ॥२७॥

तस्मादेव न कुत्रापि सुवृष्टिर्नियमान्विता ।
अतिवृष्टिः कदा कुत्र वाऽनावृष्टिर्भयप्रदा ॥२८॥

अनवरतधारा वा कुत्र वृष्टिर्भवत्यहो ।
कुत्र न दृश्यते बिन्दुर्जलस्य भूमिपल्वले ॥२९॥

गर्जतीह तथा सिन्धुर्जलपूर्णो महार्णवः ।
परन्तु दुःखतप्तानां कारुण्यञ्च तथैव ह ॥३०॥

प्रकृतिः निष्ठुरा जाता न शृणोति व्यथाकथाम् ।
करोति सा यथा तस्यै रोचते भीमरूपिणी ॥३१॥

अपराधः कृतश्चान्यैर्दण्ड्यन्ते चापरा जनाः ।
पापिनो सन्ति दुःखिनस्तथा धर्मपरायणाः ॥३२॥

यथा धनी तथा मानी तथा ज्ञानी प्रियम्वदः ।
न बाधते कमत्रैव जलाभावो भयप्रदः ॥३३॥

यथा मीना जलाभावेन म्रियन्ते सरोवरे ।
तथा साधारणा लोका म्रियन्तेऽद्य जलं विना ॥३४॥

हाहाकारोऽस्ति सर्वत्र सम्मुखे दुःखदानवः ।
किं विलासप्रमुग्धोऽस्ति कलियुगे भयावहे ॥३५॥

जनानां दुर्दशां पश्य क्रन्दतीह च प्रस्तरः ।
का कथा स्नेहस्निग्धानां कवीनामिह भूतले ॥३६॥

चिन्तयित्वा ज्वराक्रान्तं भवतीह च मे मनः ।
धन्यास्ते सुजनाः सन्ति ये तत्र सङ्कटस्थले ॥३७॥

जलं विना क्षणं मात्रं कष्टदायकमेव च ।
अतीयन्ते दिनानि वै कथं तेषां महीतले ॥३८॥

जलस्य संग्रहे कष्टं सञ्चयने ततोऽधिकम् ।
जलाभावस्य सा वार्ता मूकीकरोति सज्जनम् ॥३९॥

जलं विना मृताः कुत्र कुत्र वै जलताण्डवैः ।
जलप्रतीक्षया कुत्र सन्ति लोका हतप्रभाः ॥४०॥

जलं मलमयं कुत्र कुत्र तदेव पङ्किलम् ।
न फलति फलं वृक्षे न पुष्पं पत्रमेव न ॥४१॥

वृद्धा शाखा तथा रूक्षा वेदयति स्ववेदनाम् ।
दयनीयां दशां दृष्ट्वा क्रन्दति चित्तवायसः ॥४२॥

चिन्तयति किमद्य मे जीवनं केवलं विषम् ।
सर्वमस्ति कथं दुःखमहर्निशं विवर्धते ॥४३॥

जलाय धावनं कुत्र तदर्थं कुत्र रोदनम् ।
तदर्थं योजना कुत्र कुत्र वा स्थानवर्जनम् ॥४४॥

जलप्रतीक्षया व्यस्ता शुष्कता दुःखकर्कशा ।
प्रतीक्षायां जलस्यैव प्रयाति समयो वृथा ॥४५॥

क्षणं जीव कणं पीत्वा सर्वत्रैव च सा कथा ।
चिन्तयन्ति जनाः सर्वं सर्वकारः करिष्यति ॥४६॥

तदर्थमुद्यमहीना न किञ्चिच्चिन्तयन्ति ते ।
अपेक्षते न दुष्काल आगच्छति यथा तथा ॥४७॥

प्रतिवर्षं महाघोरो दारुणो जलसंकटः ।
सर्वत्र चलति मात्रं वाग्वितण्डा मनोहरा ॥४८॥

परिस्थितिस्तदा तत्र तिष्ठतीह यथा तथा ।
प्रतिवर्षं तथा तत्र दुर्भिक्षभयपीडिताः ॥४९॥

अनावृष्टिपिशाचेन चाक्रमिता भवन्ति ते ।
कृषकाणां महद्दुःखं भूमिर्न सस्यशालिनी ॥५०॥

नोत्पद्यते कणं कुत्र जलाभावेन हेतुना ।
जलाभावे बलाभावो बलाभावे सुखं कुतः ॥५१॥

''भारतोदयः'' पत्रिकायां प्रकाशितम्

******

१४.

# भूकम्पभैरवम्

हे विश्वपालक विनायक विश्वबन्धो
हे विश्वनाशक विचारक कालसिन्धो ।
हे जीवनप्रणयपुष्पविलासलोल
वन्दे विनम्रहृदयस्तव पादपद्मम् ॥१॥

सर्वं यदत्र भवतीह विनाशकृत्यम्
नूनं त्वया विरचितं नवचित्ररूपम् ।
त्वं ध्वंसकारको विनाशको विश्वभूमि-
र्विश्वं विनाशयसि संसृजसि क्षणेन ॥२॥

त्वमुत्कलस्य सरलस्य च चक्रवात-
स्त्वं गूर्जरेऽप्रतिहतो नवभूमिकम्पः ।
आयान्ति यान्ति सरलास्तव कालगर्ते
त्वं क्रीडसीह सततं नवकौशलेन ॥३॥

भूकम्पनं समभवन्मम गूर्जरेऽस्मिन्
लक्षाधिकाश्च मनुजाः सहजेन नष्टाः ।
ध्वंसस्य नूतनविनाशकताण्डवेन
दोषं विनैव विहता नवगूर्जरश्रीः ॥४॥

तेनैव जातं सकलं विभग्नं विदारिता नो वसुधा तदानीम्।
विखण्डितं स्वप्नपुरं जनानां विमन्थिता नो जनता समस्ता ।।५।।

जातं च शून्यं सकलं तदानीं विचूर्णिता मानवभावभूमिः ।
न कस्य कण्ठे चरतीह शब्दो जिह्वा न कस्या वदति स्म तत्र ।।६।।

भयस्य भीमा विचरन्ति तत्र भोक्तुं समस्तं सुखदुःखभावम् ।
सर्वे यदा भीमभयेन भीता क कस्य दुःखानि हरिष्यतीह ।।७।।

भूकम्पनं नो यमदूततुल्यः समागतः किं कलिकालबन्धुः ।
न यस्य चित्ते करुणातरङ्गः संक्रीडति स्नेहरसेन सिक्तः ।।८।।

सर्वेऽत्र दग्धा भयवह्नितापैः सर्वेऽपि शुष्का रसभावशून्याः ।
क्रन्दन्ति सर्वे करुणावतारं स्मृत्वा सखेदं विषयानुरक्ताः ।।९।।

विध्वंसधूमैर्भरितं ह विश्वं विनाशभीत्या दलिता च भूमिः ।
सर्वं सुखं क्षणभरेण नष्टं भ्रष्टं समस्तं नवकम्पनेन ।।१०।।

प्रकम्पितस्तेन विलासवृक्षः प्रकम्पिता काननकल्पवल्ली ।
प्रकम्पितं भीमशीलं भूधर प्रकम्पितं जीवनयोगसूत्रम् ।।११।।

अनादिमाया किमु मर्दिता वा किं प्रकृतिर्हा वत कोपमत्ता ।
किं वा स शेषः सहते न कष्टं भूधारणैर्वा परिपीडितश्च ।।१२।।

सर्वत्र दुःखानलधूमराजिः सर्वत्र वै क्रन्दनकाव्यकान्तिः।
सर्वत्र चिन्ताविषवह्नितापः किं चिन्तनीयं समये कराले ।।१३।।

नष्टभ्रष्टानीह तानि नगराणि विशेषतः ।
यत्र न सुन्दरं वस्तु सर्वं तेनैव कुत्सितम् ।।१४।।

समग्रे गुर्जरे प्रान्ते भूकम्पनस्य भैरवम् ।
अव्याप्नोद् विषवत्तत्र जले तैलमिव क्षणे ।।१५।।

ज्वलितं जीवनं कुत्र कुत्र प्रज्वलितं वनम् ।
कुत्र ध्वस्तं विनष्टं वा कुत्र विमर्दितं मनः ।।१६।।

कुत्र चिन्ता हाहाकारमयी जीवनग्रासिनी ।
कुत्र वा ध्वंसरासेन मर्दितेव च मेदिनी ।।१७।।

महाभयं समुत्पन्नमागता नववेदना ।
प्रकम्पिता यदा भूमिः प्रकम्पितात्र चेतना ।।१८।।

कथं पलायनं श्रेयः कुत्र न भूतले भयम् ।
स्थाने स्थाने जना दुस्थाः सर्वेषां हृदि संशयः ।।१९।।

क्रन्दति कोऽपि दुःखेन निन्दति कोऽपि वा हरम् ।
चिन्ताविचलितं चित्तं कोऽपि बोधयते क्षणम् ।।२०।।

विचिन्त्य सकलं तथ्यं कोऽपि भवति सुस्थिरः ।
कोऽपि भयातुरश्चात्र स्वयं भवति प्रस्तरः ।।२१।।

जीवनं स्वप्नवज्जातं निर्गता प्राणभावना ।
सञ्जातं सकलं शून्यं गगनमिव यातना ॥२२॥

वैतरणीसमा चिन्ता शरीरस्नायुसंकुले ।
जले भीतिः स्थले भीतिर्भीतिश्चात्र प्रतिक्षणम् ॥२३॥

मरणं सहजं जातं विना रणं रणस्थले ।
न विचारयितुं कालो नागपाशो तथा स्थले ॥२४॥

सर्वे प्रधाविता लोका विहाय गृहवस्तूनि ।
कोणे कोणे प्रदेशेऽस्मिन् भयस्य भीषणध्वनिः ॥२५॥

शयने मरणं कस्य कस्य पलायनक्षणे ।
कस्य वा पाकशालायां कस्य भयेन तत्स्थले ॥२६॥

स्मरणेन मृताः केऽपि तदानीं दुःखजर्जराः ।
दर्शनेन मृताः केऽपि भयव्यथाविषातुराः ॥२७॥

क्षणे जातं महाशून्यं प्रदेशेऽस्मिन् भयंकरे ।
क्रन्दनं न श्रुतं तीव्रं तत्रैव भूमिगह्वरे ॥२८॥

अकालदुःखस्य कलां निधाय तद्
विधाय कालस्य कपालवन्दनम् ।
कलौ करालं कठिनं निदारुणं
समागतं भूमितलेऽत्र कम्पनम् ॥२९॥

प्रकम्पितं प्रेतपिशाचविस्तरं
स्तरे स्तरे तिक्तविभावगुञ्जनम् ।
मनो विनाशस्य भयेन कर्कशं
व्यथा समस्ता दहतीव जीवनम् ॥३०॥

गृहे न शान्तिर्न च कस्य मन्दिरे
विनाशदुःखं चलति स्तरे स्तरे ।
विध्वंसदुःखेन धरा व्यथातुरा
प्रकम्पितं प्राणप्रवाहपिञ्जरम् ॥३१॥

कम्पिता पृथिवी माता प्रकम्पितश्च मन्दिरम् ।
प्रकम्पितं जलं जालं महाकालस्य कन्दरम् ॥३२॥

प्रकम्पिता लता तन्वी प्रकम्पितं वनं घनम् ।
घोरे सङ्कटकाले किं प्रकम्पितं न जीवनम् ॥३३॥

प्रकम्पितो महामेरुः प्रकम्पितो हिमालयः ।
शश्मानमिव सञ्जातं स्थानं सुखमयं च यत् ॥३४॥

द्रष्टुं न समयः कस्य निजात्मानं भयावहे ।
परिवारस्य का वार्ता भयस्य दारुणे व्यूहे ॥३५॥

भयेन कम्पितं गात्रं तत्र नेत्रं शिरस्तथा ।
विलापव्यालसंघाते व्यथा निर्गलिता यथा ॥३६॥

मरणं निकटे कस्य कोलाहलं करोति किम् ।
अपश्यत् सम्मुखे कोऽपि चञ्चलं काललङ्गलम् ॥३७॥

अक्रन्दद् बालवच्चात्र कोऽपि भयेन मानवः ।
अवदद् वेदनादग्धो रक्ष रक्ष हे माधव ॥३८॥

सरोवरेषु न हंसा गगने न च वायसाः ।
सर्वेऽत्र दुःखिनः सन्ति सर्वत्रैका दशा कृशा ॥३९॥

यदा स्थले स्थले मातुर्देशस्य गुणकीर्तनम् ।
कोणे कोणे यदा भूमौ मातुश्चरणवन्दनम् ॥४०॥

यदा जयध्वनिस्तत्र देशभक्त्या प्रीतं मनः ।
यदा भारतवर्षस्य भूमौ प्रेमहुताशनः ॥४१॥

सुरजबाडिसेतुश्च द्विखण्डितोऽभवत्तदा ।
अनृत्यत् कालराक्षसो यथा भीमो भयानकः ॥४२॥

गौरवं भूजप्रान्तस्य भूमौ जातं विलुण्ठितम् ।
यदैतिहासिकमासीत् समस्तं सुन्दरं नवम् ॥४३॥

विनष्टं विपणिकेन्द्रं तदानीं तत्र सुन्दरम् ।
निर्मितं शतवर्षेभ्यः पूर्वं यदत्र बन्धुरम् ॥४४॥

चूर्णीभूतमहो दुःखं दर्पणगृहमेव च ।
मदनसिंहरावेण निर्मितं शोभनं नवम् ॥४५॥

तदानीं तत्र विध्वस्तो भूजस्थः संग्रहालयः ।
तेन साकं हीरा-नीला - लौहचित्रकलादयः ॥४६॥

विनष्टं सहसास्माकं कच्छसंस्कृतिगौरवम् ।
भैरवमिव जातं तत् स्थानमकालकम्पनात् ॥४७॥

मुद्राः पुरातनाः सर्वाः प्रविष्टा भूमिगह्वरे ।
विलुप्ताः सकलास्तत्र महान्धकारसागरे ॥४८॥

अधुना भग्नशिलास्ताः कथयन्ति व्यथाकथाम् ।
वेदयन्ते विषादस्य वेदनां यन्त्रणान्विताम् ॥४९॥

कीदृग् भयावहमासीद् भूकम्पनं न कल्प्यते ।
तत्र मृतदेहानाञ्च चिह्नटीकरणं कुतः ॥५०॥

पूर्णमाकलनन्तेषां कदापि नैव संभवम् ।
ध्वंसस्य रूपरेखां च कल्पयितुं न शक्यते ॥५१॥

विनष्टानां पदार्थानामाकलनस्य का कथा ।
स्थाने स्थाने श्मशानेषु ज्वलन्ति केवलं चिताः ॥५२॥

भयं न क्षीयते चित्तादायाति कम्पनध्वनिः ।
संसारे कम्पते जन्तुः कम्पते कानने मुनिः ॥५३॥

प्रकम्पनायते चित्तं कम्पते देहपिञ्जरः ।
अधुना गर्जनं नास्ति प्रकम्पतेऽत्र कुञ्जरः ॥५४॥

पिञ्जरः कम्पते कुत्र कुत्र मन्दिरमेव नः ।
कम्पनस्य भयं किन्तु समानं सकले स्थले ॥५५॥

भयं सृजति देहेऽत्र नवं नवं प्रकम्पनम् ।
किं जातमिति या चिन्ता सैवात्र प्राणघातिनी ॥५६॥

कथं जातमिति चिन्ता सा हृदयविदारिणी ।
न केवलं मृता भीता भयभीमप्रतारिताः ॥५७॥

अभीताश्च तथा तत्र मृताः कम्पनकम्पिताः ।
यथाग्नौ वायुवेगेन पतन्ति कीटकृमयः ॥५८॥

तथात्र पतिता लोकाः प्रकम्पनस्य हेतुना ।
हठादेव स्थिरा दृष्टिः सहसा शीतलं बलम् ॥५९॥

चलितं स्थिरमित्यत्र प्राणवायुर्महानलः ।
पश्यन्ति दर्शका मात्रं चित्रमिव विचित्रितम् ॥६०॥

विलोक्यते नवं सर्वं करणीयं न विद्यते ।
केवलं रोदनं तत्र रोदनं हि प्रतिक्षणम् ॥६१॥

यत्रासीत् शोभनं पुष्पमधुना तत्र प्रस्तरः ।
यत्रासीद् वाटिका रम्याधुना तत्र सरोवरः ॥६२॥

यत्र क्रीडाभूमिरासीदधुना शून्यगह्वरम् ।
यत्रासीन् मन्दिरं तत्र महागर्तं भयंकरम् ॥६३॥

नास्ति तर्कयितुं कोऽपि स्थाने तत्र भयंकरे ।
निमग्नाः सकले जीवाः कालक्रीडनप्रान्तरे ॥६४॥

हतप्राणा महालक्ष्मीर्हतप्राणाः सरस्वती ।
निष्करुणस्य देवस्य केयं भगवतो रतिः ।।६५।।

यत्रासीद् गर्जनं तीव्रं तत्र शान्तिस्तपस्विनी ।
अत्र ध्वंसमुखे सर्वं यथा ज्ञानी तथा मुनिः ।।६६।।

एका चिन्ता महाघोरा किं जातं सहसा भूमौ ।
यदीत्थं भवति नित्यं जीवामो भूतले कथम् ।।६७।।

कथं करणीया वृत्तिः कथं जीवनसंभवः ।
इति जञ्जालजालेऽत्र भयेन कम्पते जीवः ।।६८।।

न ज्ञायते यथार्थेन कदा पुनर्भविष्यति ।
विज्ञानं दुर्बलं यत्र कोऽवास्मान् कथयिष्यति ।।६९।।

तत्रैव यातना साक्षान्मूर्तिमयीव भासते ।
विलोक्य दुःखचित्राणि व्यथा मे पर्वतायते ।।७०।।

क्रोधेन कम्पते चित्तं विलोक्य दुःखदुर्दशाम् ।
खाद्यवस्त्रविहीनानां जनानां हतसम्पदाम् ।।७१।।

अनन्तदुःखकान्तारे सन्तरन्ति निराश्रयाः ।
चिन्तयन्ति नवं मार्गं जीवितुं नवलीलया ।।७२।।

मात्रं यस्य गृहं नष्टं तत्तु प्रायो भविष्यति ।
सर्वस्वं यस्य नष्टं तत् कथं वा सम्भविष्यति ।।७३।।

कथं बीजं विनष्टं यदङ्कुरं जनयिष्यति ।
कथं पुनः श्मशानेऽस्मिञ्जीवनं सञ्चरिष्यति ।।७४।।

विदग्धेऽस्मिन् वने कस्मात् संभवश्चन्दनस्य वा ।
गात्रे सा वेदनाव्याधिर्विषवच्चाभिवर्धते ।।७५।।

स्थातुं कस्य गृहं नास्ति पातुं पात्रं न विद्यते ।
गात्रे सा भावनाभीतिः साक्रोशं नरीनृत्यते ।।७६।।

कुत्र सा पिञ्जरी शून्या न सन्ति तत्र पक्षिणः ।
कस्य प्राणा व्यथादग्धा आह्वयन्ति च मोहन ।।७७।।

पुरातनं तिष्ठति कुत्र भूतले
पलायते नूतनमेव सुन्दरम् ।
कालस्य कण्ठे करुणा न विद्यते
विषं हि संसाररसे रसान्वितम् ।।७८।।

किमत्र चित्रं यदि याति जीवनम्
किमत्र चिन्त्यं यदि नश्यति स्वनम् ।
विशालचक्रं चलतीह चञ्चल-
मनन्तगर्ते गलतीव सम्बलम् ।।७९।।

सखे समस्तं समये विनश्यति
तथापि जीवो लभते न शिक्षणम् ।
अहर्निशं कीटवदेव केवलम्
मले तथा नृत्यति लोभलोलुपः ।।८०।।

रसाय नित्यं रसना व्यथातुरा
व्यथाविदीर्णा मम सुन्दरी धरा ।
जलं कदा नाशयतीह जीवनम्
कदा करालं कठिनं भूकम्पनम् ।।८१।।

दुःखार्तानां करुणकथनं भूमिमध्ये प्रविष्टम्
सन्तप्तानां चपलचलनं तत्र गर्ते निविष्टम् ।
नष्टं सर्वं कलिकलकलं कालकान्तारकुक्ष्याम्
पक्षाघातो व्यथयति मनो दारुणो दुःखभीमः ।।८२।।

मनसि मनसि दुःखं क्रोधरूपत्वमेति
विषधर इव चित्तं दंशति ध्वंसवस्तु ।
चलति चपलगत्या कालवेतालरासो
न च मम करणीयं किञ्चिदेवात्र किन्तु ।।८३।।

कथमिह मरुभूमौ जीवनं जीवितव्यम्
तृणमिव सहनीयं ग्रीष्मतापं कथं वा ।
कथय कथय बन्धो कारणं मां सुखस्य
कथमिह चलनीयं सर्वदा शान्तचित्ते ।।८४।।

ईश्वरो बलीयान्विश्वे सर्वेषां सुखचिन्तकः ।
तथापि लभते दुःखमविवेकीह मानवः ।।८५।।

जानाति मरणं सत्यं तथापि दुःखकातरः ।
क्रन्दनं विफलं सर्वं तथापि दुःखजर्जरः ।।८६।।

माया विमुह्यति सर्वान्महामाया बलीयसी ।
मानवस्य गतिर्नास्ति केवलं क्रन्दनं विना ॥८७॥

मेदिनी मर्दिता जाता प्रकृतिर्भयविह्वला ।
महाकालस्य कोपेन सर्वा जाताश्च चञ्चलाः ॥८८॥

क्षणे ध्वस्तानि जातानि नगराण्यत्र गुंजरे ।
क्रन्दन्ति दुःखसन्तप्ता वासहीना भयंकरे ॥८९॥

भूकम्पनं कथं घोरं दारुणं जीवनाशकम् ।
सुस्पष्टं तत्क्षणे सर्वं कीदृशं दुःखदायकम् ॥९०॥

न तारका भाति भयेन शोभना
न वाति व्यग्रो विपुलः प्रभञ्जनः ।
जनाः समस्ता भयभाववेष्टिताः
प्रकम्पनेनात्र विशालगुर्जरे ॥९१॥

अहो विशालं भयदं प्रकम्पन-
मदृष्टपूर्वं नवभीमरूपिणम् ।
विलोक्य यं धावति वै त्रिलोचनो
न लोचनं लोकयितुं यते क्षणम् ॥९२॥

न कम्पनं कुत्र विलोक्यते क्षणं
'क्षणे श्मशानं नगरं सुशोभनम् ।
अहो विधातुः कठिनो विनिश्चयो
जयस्तु तस्यैव सदा सुनिश्चितः ॥९३॥

भयेन लोका न पिबन्ति तज्जलं
न वा ते खाद्यं वत खादितुमिहे ।
अनन्तशून्यस्य विशालनग्नताम्
विलोकयन्तीह करालवायसाः ॥६४॥

धनं गतं साधनमेव निर्गतम्
गता सुवृत्तिः सकलं नियोजनम् ।
न दृश्यते कुत्र क्व वास्ति शोभनम्
न वास्ति रम्यं सदनं सुशोभनम् ॥६५॥

न दृश्यते कुत्र सखास्ति सोदरो
न नेत्रपार्श्वे चपलो वृकोदरः ।
न कर्मयात्रा चलितुं प्रवर्त्तते
यतो सदैव भयभीमगर्जनम् ॥६६॥

न धर्मयात्रा भवतीह सङ्गरे
न दृश्यते कुत्र किमस्ति साधनम् ।
विनाशभूतस्य विभाति भूषणम्
न रोदनार्थं समयोऽत्र विद्यते ॥६७॥

कालस्य कण्ठे करुणा कलंकिनी
ततो न पुष्पं न च तस्य सौरभम् ।
न गौरवं भावयतीह कैरवम्
काले कराले सकलं विनिश्चलम् ॥६८॥

न भूमिमाता मधुरा वसुन्धरा
शृणोति सा कस्य विलापवेदनाम् ।
असीमनाशस्य विभीषिकाच्छविः
क्षणे क्षणे क्षालयति स्ववैभवम् ॥९९॥

न वैखरी कण्ठतटेऽत्र चञ्चला
प्रतीयते सा प्रतिमा व्यथाकुला ।
सुखस्य स्वप्नाः सहसा विलुण्ठिताः
संविद्यते केवलमेव यातना ॥१००॥

न तत्र मानवाः सन्ति हसन्ति हासयन्ति वा ।
विलपन्ति व्यथादग्धा विलोक्य कालकौतुकम् ॥१०१॥

यत्रासन् सुन्दरा ग्रामास्तत्र विध्वंसताण्डवम् ।
न सन्ति कौरवास्तत्र पीडयितुं च पाण्डवान् ॥१०२॥

यत्रासीत् क्रीडनं तत्र क्रूरध्वंसस्य वाटिका ।
अद्भूतं संभूतं तत्र क्षणे नूतननाटिका ॥१०३॥

यत्रासीद् बालिका रम्या तत्र ध्वंसस्य कालिका ।
जीवनं स्वप्नवन्नष्टं दृष्ट्वा कालप्रहेलिकाः ॥१०४॥

अचलं चञ्चलं जातं स्थिरता क्व गता पुनः ।
यत्रासीत् सुन्दरी तन्वी तत्र ज्वलति वै चिता ॥१०५॥

माता नाह्वयते कस्य कस्य पिता दिवंगतः ।
कस्य कन्या विलुप्ता सा यां स्मरति तथागतः ॥१०६॥

कस्य पुत्रश्चिरं सुप्तो विना शय्यां च भूमिषु ।
पतङ्गाः पतिताः शान्ता दुष्कालकालवह्निषु ॥१०७॥

कति निपतिता वृक्षा विहाय रूक्षतां तदा ।
विनष्टाः सरला बाला जातं भूकम्पनं यदा ॥१०८॥

क्षणे तृणायितो जातो जीवनवनपादपः ।
खगस्य गमनं कुत्र नगे नृत्यति वै शोकः ॥१०९॥

न रोधो न विरोधो वा न गर्जनं न तर्जनम् ।
जीवनं निर्गतं देहात् पुष्पे न सौरभं पुनः ॥११०॥

तथा मूलं मले तिष्ठन् प्रतीक्षतेऽत्र सर्जनम् ।
अतिष्ठन्न धनं तत्र न जीवनं न यौवनम् ॥१११॥

यदर्थं धावति जन्तुः प्रतिपदं प्रतिक्षणम् ।
तदेव महागर्तेऽस्मिन् प्रविष्टं जलबिन्दुवत् ॥११२॥

यदत्र सर्वं मधुरं विमुह्यति
यदत्र चित्ते सृजतीव कम्पनम् ।
क्षणे विनष्टं कुसुमं पुरातनम्
विना विलम्बं कृतमत्र नूतनम् ॥११३॥

नरस्य गर्वः क्षणमत्र तिष्ठति
पलाशपत्रं पततीव भूतले ।
विनाशकाले न धनं प्रयोजनम्
प्रसहतेऽत्र सकलमकिञ्चनः ॥११४॥

न यौवनं कामकलापमन्दिरं
न मन्दिरं देवविलाससुन्दरम् ।
न सुन्दरी स्नेहसुधाविमण्डिता
विनाशकाले सहचारिणी भवेत् ॥११५॥

तृणं यथा तिष्ठतीह विनिन्दितं
तथैव भूमौ भवतीह पादपः ।
महीरुहाणां स्थिरता न विद्यते
कथा क्व वास्ति प्रलयेऽत्र पक्षिणाम् ॥११६॥

क्षुधा यथा पीडयति प्रतारिणी
तृषा यथा ताडयति सदैव नः ।
न जीवनं याति यदा व्यथामयं
न यन्त्रणा याति कलेवरात्पुनः ॥११७॥

जरा करोतीह तनुं व्यथामयं
दिने दिने नश्यति यौवनप्रभा ।
नवा बुभुक्षा ग्रसतीह मानसं
रसस्य पात्रं न जहाति वासना ॥११८॥

क्षणं रणं यत्र पलायनं क्षणं
क्षणं शरीरं चलनञ्च वै क्षणम् ।
कथं रणार्थं यतसे प्रतिक्षणं
त्वमेव दुःखस्य प्रधानकारणम् ॥११९॥

विचित्रलीला करुणामयस्य या
साकल्पनीया विदुषां सुमेधसाम् ।
कदात्र पुष्पं गडतीह भूतले
कदा तदेवात्र वने विलुण्ठितम् ॥१२०॥

कदा धनं जीवयतीह जीवनं
कदात्र तेनैव मनो व्यथामयम् ।
कदा विलासस्य धनं हि कारणम्
कदा तदर्थं नगरे महारणम् ॥१२१॥

कदा धरा सुन्दरसस्यशालिनी
कदा करुणा प्रलयप्रसारिणी ।
या मेदिनी मोदयतेऽत्र मानसं
ददाति सा कुत्र विषादविस्तरम् ॥१२२॥

वने कदा नृत्यरतो महामृगः
स्वच्छन्दमेवात्र विनैव वेदनाम् ।
कदात्र नानासहनीयवेदनां
विना हेतुं संसहते कलापिनी ॥१२३॥

न दुर्जनो दोषफलेन दण्डितः
कदातिकष्टं लभतेऽत्र सज्जनः ।
तृणस्य भाग्ये सकला विडम्बना
वने हसन्तीह विशालपादपाः ॥१२४॥

सुखं स्वतो वा परतो भवेदिह
किं कर्मणा तन्नवसाधनेन वा ।
किमत्र सर्वं निजभाग्यलेखनं
किं वा समस्तं निजकर्मणः फलम् ॥१२५॥

बली कथं कालबलेन भूतलं
विना विरोधं त्यजति पराक्रमी ।
तथाऽत्र सर्वे समये विहाय तत्
चलन्ति लोकाश्च विलासवैभवम् ॥१२६॥

तस्मादत्र सुखं भूमौ चञ्चलं जलबिन्दुवत् ।
चलति चपलो वातः केवलं नटवद् भूमौ ॥१२७॥

कथा पुरातनी सत्यं तथापि भ्रान्तधारणा ।
जानाति कारणं जीवस्तस्य न याति वासना ॥१२८॥

यथा खगस्तथा जीवो महाशून्यो महाम्बुधौ ।
यत्र न यातना काचिन्निदाघेऽपि यदा मधुः ॥१२९॥

यत्र न सुन्दराः सर्पा विषाक्ता रूपशालिनः ।
यत्र सुखकरं सर्वं सुन्दरं मधुरं नवम् ॥१३०॥

नाक्रमन्ति महारोगा न भोगभावना यतः ।
अनन्तस्य प्रशान्तस्य सुखे सञ्चरते जीवः ॥१३१॥

न शाखा न मूलं तत्र न भूमिर्न च पादपः ।
न जलं न मलं तत्र न सागरो न वा सरः ॥१३२॥

न वै रूपस्य लावण्यं न भूपस्य प्रशासनम् ।
न वह्निवासना यस्माज्ज्वलति न तथा तृणम् ॥१३३॥

न रणं रावणस्यात्र न कंसध्वंसयोजना ।
न जीर्णस्य परित्यागो न च नवस्य कामना ॥१३४॥

अत्र तत्र च सर्वत्र कालचक्रं भयावहम् ।
अचलं चालयन्नेव स्वयं भवति चिन्मयम् ॥१३५॥

हसति कुत्र वा जन्तुः कुत्र क्रन्दति स क्षणम् ।
चक्रवातः कदा भूमौ कदा पुनः प्रकम्पनम् ॥१३६॥

चलति जीवनं कुत्र कुत्र पलायितुं व्रती ।
चक्रस्य चलनं पश्य विलपतीह सारथिः ॥१३७॥

वेदयितुं हि शक्नोमि केवलं वेदनां सखे ।
यतोऽस्मि दुःखतप्तोऽहं किं करणीयमस्ति मे ॥१३८॥

नाहं प्रशासको नेता दाता वा धनसम्पत्तेः ।
कोऽत्र शृणोति मद्वाक्यं सर्वे स्वार्थपरायणाः॥१३९॥

भूकम्पभैरवं काव्यं लिखितं यत्नपूर्वकम् ।
स्वदुःखस्य प्रशान्त्यर्थमहं कविरकिञ्चनः ॥१४०॥

******

## १५.

# दुर्जनशतकम्

नौमि नित्यं निराकारं निराधारं निरञ्जनम् ।
दुर्जनानां विनाशाय सज्जनानां सुखाय च ।।१।।

दुर्जनशतकस्यादौ नौमि विभाकरं विभुम् ।
निर्विघ्नेन समाप्त्यर्थं ममैव काव्यकर्मणः ।।२।।

काव्येऽस्मिन्दुर्जनस्यैव स्वभावं वर्णयाम्यहम् ।
सुजनान् बोधयामीह दुष्टदुर्गमलक्षणम् ।।३।।

यद्यपि तानि सर्वाणि दुर्ज्ञेयानि युगे युगे ।
करोमि केवलं तेषां प्रमुखानां विचारणाम् ।।४।।

अवश्यमेव बोधव्यं दुष्टदुर्बोध्यलक्षणम् ।
तस्य फलं सुखं शुद्धं शान्तिरपि विनिश्चला ।।५।।

केनापि कविना प्रोक्तं सुप्रसिद्धं सुभाषितम् ।
मणिना भूषितः सर्प इव दुष्टो भयंकरः ।।६।।

वरं सर्पो महामूर्खो भयदो विषजर्जरः ।
दंशनचतुरः काम्यो न दुर्जनः कदाचन ।।७।।

सर्पो दशति कदाचिदकाले क्रोधकारणात् ।
प्रतिपदं विना हेतुं दशति किल दुर्जनः ॥८॥

रसनायां च सर्पस्य विद्यते केवलं विषम् ।
परन्तु दुर्जनस्यैव सर्वाङ्गे विद्यते विषम् ॥९॥

वचनं सायकं तस्य हसनं हानिकारकम् ।
मिलनं दुःखसन्देशश्चलनं भयदायकम् ॥१०॥

आयाति निकटं दुष्टः सम्मुखे तिष्ठति क्षणम् ।
परन्तु सृजति भीमं मानसिकं प्रकम्पनम् ॥११॥

वदति बकवच्छान्तो वचनं विषपूरितम् ।
सरलं तरलं वाक्यं चित्तपीडानियोजकम् ॥१२॥

मधुरं मधुरं नित्यं हसति कोपकर्कशः ।
परश्रीकातरः क्रूर ईर्षातप्तो हुताशनः ॥१३॥

भ्रमति काकवन्नित्यं शृणोति बकवत्तथा ।
प्रचारयति तच्छर्वं प्रविश्य श्वानवद् गृहम् ॥१४॥

अधुना सुलभं लोके सर्वरोगस्य चौषधम् ।
त्रिलोके सुलभं नैव किन्तु दुष्टस्येवौषधम् ॥१५॥

भवतु ब्राह्मणो वा स शूद्रो वा क्षत्रियोऽपि वा ।
भवति दुर्जनो लोके स्वभावदोषहेतुना ॥१६॥

यथैकेन कुवह्निना दह्यते विपिनं घनम् ।
तथैव दह्यते सर्वमेकेन दुर्जनेन नः ॥१७॥

जले तैलं यथा शीघ्रं प्रसरति क्षणेन च ।
तथैव दुर्जने गूह्यं सम्प्रसरति तत्क्षणे ॥१८॥

धातुः सर्वासु सृष्टिषु दुर्जनोऽधमसर्जनम् ।
तेनैव निन्दितो भूत्वा विरिञ्चिर्मानवर्जितः ॥१९॥

यो वदति क्रूरं वाक्यं शूलमिव भयंकरम् ।
हितकरं न यदत्र स दुर्जनो न संशयः ॥२०॥

हितं कामयते नैव न च शान्तिप्रदं सुखम् ।
आत्मानं मनुते विज्ञः स दुर्जनो न संशयः ॥२१॥

न पश्यति गुणं कुत्र केवलं दोषदर्शने ।
यस्य चित्तं सदा लिप्तं स दुर्जनो न संशयः ॥२२॥

करोति न शुभं कार्यं लोकहितकरं कदा ।
वदति केवलं वाक्यं स दुर्जनो न संशयः ॥२३॥

सदा निजसुखे लग्नः परदुःखे न कातरः ।
परश्रीकातरो योऽत्र स दुर्जनो न संशयः ॥२४॥

निन्दितोऽपि करोति यः कुकार्यं काममोहितः ।
संसारेऽस्मिन्महामूर्खः स दुर्जनो न संशयः ॥२५॥

अङ्गारः शतधौतेन मलिनत्वं न मुञ्चति ।
तथैव दुर्जनो हीनं स्वभावं त्यजतीह न ॥२६॥

दुर्जनस्तु महाव्याधिर्दुर्जनश्च महाविषम् ।
कुकर्मविषवृक्षस्य दुर्जनस्तु बीजं महत् ॥२७॥

दौर्भाग्याद् भवति मैत्री दुर्जनेन यदा सह ।
तदा दुःसमयोऽस्माकं समागतो न संशयः ॥२८॥

सङ्गे तस्य सदा दुःखं न सुखलेशोऽपि कदा ।
विचारयति किं सर्पः को बन्धुः कश्च सोदरः ॥२९॥

मलं शोधयते नित्यं मक्षिकेवात्र दुर्जनः ।
पश्यति विषपात्रं हि चन्दनं न कदाचन ॥३०॥

यस्य नास्ति शुभा प्रज्ञा न सुविचारकल्पना ।
क्षणे क्षणे नवं रूपं धारयते स दुर्जनः ॥३१॥

हृदये किञ्चिदन्यं च किञ्चिदन्यं च भाषणे ।
कर्मणि किञ्चिदन्यं तत् स दुर्जनो न संशयः ॥३२॥

काकवद् धावनं यस्य बकवच्चात्र शुभ्रता ।
उदरहेतवे वेषं बहुविधं बहुस्थले ॥३३॥

दुःसमये प्रियबन्धोः क्रन्दति मकरो यथा ।
स्वार्थाय स विनिर्माति सर्वदा नूतनां प्रथाम् ॥३४॥

कथा रसमयी यस्य प्रेमपूर्णं च रोदनम् ।
सम्मुखे मधुरं वाक्यं पश्चादेव च दंशनम् ॥३५॥

सर्पं दृष्ट्वा प्रत्यक्षेण ज्ञायते सर्प इति ह ।
न केनापि प्रमाणेन ज्ञातुं शक्येत दुर्जनम् ॥३६॥

अग्निं परीक्षते लोके जलं भूमितलं तथा ।
परीक्षितुं न शक्येत दुर्जनं च कदाचन ॥३७॥

गभीरं यस्य वै वृत्तं जालं पुनः सुविस्तरम् ।
नागपाशः करे यस्य स दुर्जनो न संशयः ॥३८॥

हरति सकलं चौर इव नागरिकः किल ।
स्ववचनविनोदेन सिञ्चति मानसे मलम् ॥३९॥

कण्टकैर्मण्डितो भूत्वा यथा तिष्ठति बर्बुरः ।
तथैव तिष्ठति दुष्टो दोषदर्शी निशाचरः ॥४०॥

न तस्य मित्रता कस्य चित्तविनोदकारिणी ।
मित्रता कपटाच्छन्ना डाकिनीव विमोहिनी ॥४१॥

नानारूपमयी तस्य प्रीतिर्वाराङ्गनेव सा ।
नवं नवं रूपं धत्ते स्वसुखाय स्थिरा न या ॥४२॥

दुर्जनो न जनः सत्यं स नरपशुरेव च ।
पीडयति विना दोषं शिष्टचित्तं सुकोमलम् ॥४३॥

दुर्जनेन सह मैत्री सर्वदा दुःखदायिनी ।
मकरेण सह प्रीतिर्यथात्र भयकारिणी ॥४४॥

कापतिको यथा जालं विस्तारयति कानने ।
तथैव दुर्जनो नित्यं जालं क्षिपति वै भूमौ ॥४५॥

दुर्जनो वासनाबिन्दुर्दुर्जनो विषपर्वतः ।
दुर्जनो यातनासिन्धुर्दुर्जनो राक्षसो मतः ॥४६॥

दुर्जनो दूषणस्रोतो दुर्जनः कालराक्षसः ।
ग्रामेऽस्तु नगरेऽस्तु वा तस्य विषमहर्निशम् ॥४७॥

सामाजिकोऽस्ति रूपेण कर्मणा च वनेचरः ।
तिष्ठति नगरे किन्तु भुजङ्गो विषजर्जरः ॥४८॥

पृथिव्यां सन्ति स्थानानि यत्र सर्पा न सन्ति ह ।
परन्तु न स्थलं कुत्र यत्र न दुर्जनो जनः ॥४९॥

पृथिव्यां सन्त्यनेकानि महाकुत्सितवस्तूनि ।
तेषु कुत्सितवस्तुषु दुर्जनः कुत्सिततमः ॥५०॥

वरं रोगा वरं शत्रुर्वरं दरिद्रता चिरा ।
वरं महावने वासो दुष्टो नैवच नैवच ॥५१॥

शक्नोमीह विषं पातुं गन्तुं शक्नोमि काननम् ।
धर्तुं शक्नोमि कालाग्निं परन्तु नैव दुर्जनम् ॥५२॥

दुर्जनो रत्नवद् भाति पवित्रं सुमनोहरम् ।
यदा वदति सस्नेहं सुवाक्यं मधुमण्डितम् ॥५३॥

यथा वेश्या तथा दुष्टः स्थाने स्थाने रूपान्तरम् ।
भ्रमतु गगने वा स भूमौ वा चलतु खलः ॥५४॥

सज्जनस्य यशः पश्य क्रोधी भवति दुर्जनः ।
न चोपायान्तरं दृष्ट्वा तं निन्दति प्रतिक्षणम् ॥५५॥

जन्मान्धवद् भूमौ दुष्टः सूक्ष्मदृष्टिविवर्जितः ।
सूर्यं पश्यति नैवात्र पश्यति तमसां घनाम् ॥५६॥

मलं शोधयते भूमौ यथा कुत्सितसूकरः ।
यस्मै न रोचते शुभ्रा कदली सुमनोहरा ॥५७॥

असत्यं वदति नित्यं सत्यं न भाषते कदा ।
नानाविधै प्रयत्नैर्यः पीडयते हृदं सदा ॥५८॥

कलहे समयो यस्य विलासव्यसने सुखम् ।
विवादे यस्य वैदुष्यं स दुर्जनो न संशयः ॥५९॥

यस्य वाक्यं सदा तीक्ष्णं सृजति हृदये व्यथाम् ।
दुर्गमं भयदं क्रूरं स दुर्जनो न संशयः ॥६०॥

असंस्कृतः क्रियाहीनः कुसङ्गपरिमण्डितः ।
खण्डितो दण्डितो योऽत्र स दुर्जनो न संशयः ॥६१॥

अद्य न रावणो भूमौ न वा दुःशासनः खलः ।
न क्रोधकर्कशः कंसो नैव तस्य कुशासनम् ॥६२॥

तेषां हि कालकृत्येन जाता धरा विषोदरी ।
मूढानां पथभ्रष्टानामियं प्रथात्र भैरवी ॥६३॥

भूमिः प्रदूषिता जाता सञ्जातं जीवनं वनम् ।
वने वने लीला वन्या ग्रामे ग्रामेऽत्र दुर्जनः ॥६४॥

भवति दुर्जनो भोक्ता स वै भवति भावुकः ।
अधुना धरणीमाता दुर्जनैश्च विखण्डिता ॥६५॥

भ्रमति भेकवत् कुत्र धावति श्वानवत् कदा ।
गर्जति व्याघ्रवद्यत्र स दुर्जनो न संशयः ॥६६॥

सर्पात् क्रूरो नक्रात् क्रूरो व्याघ्रादपि च दुर्जनः ।
तस्मादेव सदा त्याज्यो वासदेयो न वै जनः ॥६७॥

श्मशाने कमलं नीलं भवेदपि कदाचन ।
भवेन्न दुर्जनचित्ते परन्तु स्नेहचन्दनम् ॥६८॥

कलहो रोचते यस्मै शत्रुता यस्य प्रेयसी ।
मानापमानयोस्तुल्यः स दुर्जनो न संशयः ॥६९॥

प्रणये न मतिर्यस्य रणे चित्तं प्रतिक्षणम् ।
क्षणे क्षणे नवा चिन्ता क्षणे क्षणे च गर्जनम् ॥७०॥

रूपं दर्शयते कुत्र कुत्र वेशं विभूषणम् ।
कुत्र गौरवकीर्तिं च प्रचारयति दुर्जनः ॥७१॥

संसारपादपस्यैव विषफलं हि दुर्जनः ।
पश्यति नैव स्वदोषं परस्य दर्शने मनः ॥७२॥

सन्मार्गे चलितुं यस्य हृदये नास्ति साहसः ।
कुमार्गे चलति तस्मादत्रैव दुर्जनो स्वतः ॥७३॥

कदा स्मितं मितं शीतं वदने तस्य राजते ।
कदा क्रोधस्य कान्तारो मुखे तस्य विराजते ॥७४॥

लोभनीयं कदा रूपं कदा कमनीयञ्च तत् ।
कदा चिन्तानलध्वस्तं दयनीयं कदा च तत् ॥७५॥

कदा स्वकार्यसिध्यर्थं चातुरी स्नेहसंगिनी ।
कदा ज्वलयितुं चित्तं सैव विनोदकारिणी ॥७६॥

कदा मुनिरिव शान्तस्तत्त्वद्रष्टा तपोधनः ।
कदा विलासलीलायां निमज्जति ह दुर्जनः ॥७७॥

प्रविशति प्रतिक्षेत्रं सर्वविद्याविशारदः ।
प्रशंसाकामनायां हि विचरति स नारदः ॥७८॥

येन केन प्रकारेण ज्वलति स हुताशनः ।
दर्शयितुं स्वतेजांसि सर्वत्रैव च दुर्जनः ॥७९॥

कदा मुह्यति स चित्तं कदा दह्यति निर्दयः ।
यथेच्छं वदति भ्रष्टो दोषहालाहलमयः ॥८०॥

निन्दति नितरां शिष्टं पीडयितुं प्रतारकः ।
तेनैव लभते नित्यं नूतनं सुखमेव च ॥८१॥

वारम्वारमसत्यं यः सत्यायितुं समेधते ।
अणुवाक्यं करे यस्य सहसा पर्वतायते ॥८२॥

पश्यति पर्वतं नित्यं किन्तु चरति वै भूमौ ।
गगने भ्रमितुं नित्यं कामयते विना श्रमम् ॥८३॥

विद्याविलासरासेऽत्र न यस्य रमते मनः ।
धनाय धावति चित्तं नित्यं स एव दुर्जनः ॥८४॥

न धर्मकर्मसु निष्ठा न सत्यचयने मतिः ।
यस्य संसारकीटस्य स दुर्जनो न संशयः ॥८५॥

यथा वटतले कीटः करोति नाटकं क्षणम् ।
तथैवाचरति भ्रष्टो दुष्टो दुःखबलाहकः ॥८६॥

वदति स एव साधुः स पण्डितो विशारदः ।
स सर्वज्ञः स शास्त्रज्ञः सोऽत्र वै कुशली बुधः ॥८७॥

अहंकारशिलातल्पे तपस्यति निशाचरः ।
सर्वं सुखमयं भोक्तुं भावनाविह्वलो चलः ॥८८॥

यथा गृध्रो शवार्थं हि भ्रमति गगनेऽचले ।
तथैव स महादुष्टो ज्ञातुं सर्वं प्रतिक्षणम् ॥८९॥

क्षणे क्षणे नवा चिन्ता यस्य चित्तस्य चकोरी ।
यस्य जिह्वातले सुप्ता प्रखरा विषवल्लरी ॥९०॥

यस्य स्नायुषु नृत्यन्ति द्वेषस्य विकटा घटाः ।
नेत्रयोर्यस्य धावन्ति तमसो गहनच्छटाः ॥९१॥

यस्य कण्ठे विराजन्ते हिंसायाः सैनिकाः सदा ।
परश्रीकातरभावो यत्र वै रमते मुदा ॥९२॥

यस्य मुखे महामाया निवसति विनिश्चला ।
संप्रेरयति सा दुष्टं चलितुं मलकानने ॥९३॥

जातं यस्य मले जन्म मले यस्यैव धावनम् ।
मलं भक्षयते नित्यं स दुर्जनो न संशयः ॥९४॥

हरतु हृदयं व्याधिः प्रहरतु च मां यमः ।
भ्रामयतु च नो भूमौ महायमसमो भ्रमः ॥९५॥

तथापि दुर्जनस्यैव साहचर्यं न कामये ।
कदा सदने मार्गे वा कार्यालयेऽपि ह पुनः ॥९६॥

दुर्जनविषवृक्षस्य छाया मास्तु भूमौ मम ।
ईश्वर हे कृपासिन्धो देहि मामसीमं बलम् ॥९७॥

दुष्टस्य लक्षणं कोऽपि वर्णयितुं न सक्षमः ।
विचित्रं गहनं गुम्फं ज्ञातुं कोऽपि न वै क्षमः ॥९८॥

न दोषं पश्यति तस्य परस्य पश्यति सदा ।
तदणुं पर्वतीकृत्य प्रचारयति सर्वथा ॥९९॥

भ्रमति मक्षिकेवात्र यत्र यत्र व्रणस्थलम् ।
प्राप्नोति च मलं यत्र गर्जति कुक्कुरो यथा ॥१००॥

निम्बवृक्षः कदा भूमौ न मधुरत्वमेतीह ।
तथैव दुर्जनो दुष्टः स्वभावं न जहाति सः ॥१०१॥

रवीन्द्रकुमारपण्डाकविना विरचितं दुर्जनशतकं
समाप्तम् ।

******

# १६.

## दुर्बलता दूर्वे

कथं दुर्बलता दूर्वे कथं क्व यामो भावना ।
श्रावणेऽस्मिन् सुखेनात्र वर्षन्ति नूतना घनाः ॥१॥

कालोऽयं मधुरोऽस्माकं धरणी रत्नधारिणी ।
कम्पते कामकोपेन मानिनी नवकामिनी ॥२॥

मयूरा मोदमानाश्च चातकाः कामकर्षिताः ।
दर्दुरा जाग्रताः सर्वे लोकाः शोकविवर्जिताः ॥३॥

नाना रसमयी भूमिर्नाना रसविलासिनी ।
मेघस्य प्रेममोहेन मानिनी नवीना वनी ॥४॥

धरणी श्यामला सस्यैः क्षेत्राणि सुन्दराणि च ।
दुःखं कुत्र प्रिये दूर्वे मुञ्च सन्तापसन्ततिम् ॥५॥

निदाघो निर्गतः पश्य प्रशान्तोऽत्र प्रभाकरः ।
गगनस्य दीपं किं स कियान्न सुमनोहरः ॥६॥

वहति शीतलो वातश्चपलश्चातिकोमलः ।
कोमला कलिका रम्या रमते भ्रमरैः सह ॥७॥

जनानां हृदये नास्ति विभीषणा प्रतिक्रिया ।
स्वस्वकार्येषु संलग्ना कालेऽस्मिन् सर्वे श्रीमयाः ॥८॥

शोभापूर्णं वनं जातं द्रुमाः पुष्पैर्विमण्डिताः ।
भेदभावं परिहाय विद्यायां विबुधा रताः ॥९॥

इन्द्रस्य गर्जनं श्रुत्वा मेघो न भयकातरः ।
अधुना निर्बलो जातो भयंकरो निशाचरः ॥१०॥

सन्तु भूमौ महावृक्षाः सन्तु राक्षसपर्वताः ।
दूर्वे तव कथं भीतिर्भूमिः प्रेममयी तथा ॥११॥

वीरप्रसविनी भूमिर्जानाति तव यातनाम् ।
कीदृशोऽयं कलौ भावः कीदृशी तव यन्त्रणा ॥१२॥

भ्रमणार्थं यदि भूमिश्चलनार्थं यदि स्थलम् ।
पानार्थं यदि पानीयं कथं भीतिर्वरानने ॥१३॥

जानामि तव चित्तस्य यातनां दारुणां घनाम् ।
जानामि हृदयस्थां ते कामनां वनवासनाम् ॥१४॥

त्वमिच्छसि फलं स्वादु मलहीनं जलं सखि ।
विमलं पवनं रम्यं कमलमिव कोमलम् ॥१५॥

त्वमिच्छसि सुखं शुद्धं चिरशान्तिमयं स्थिरम् ।
त्वमिच्छसि प्रशान्तस्य सुधांशोः शीतलं करम् ॥१६॥

त्वमिच्छसि च वृक्षाणां घनच्छायां सुशीतलाम् ।
त्वमिच्छसि च मेघानां स्नेहधारां विनिश्चलाम् ॥१७॥

भवतु सागरोऽस्माकं रत्नाकरो जलार्णवः ।
प्रमुग्धो भवति हंसो यत्रास्ति सुन्दरः सरः ॥१८॥

खादति न तृणं किन्तु सिंहशिशुः स्वभावतः ।
भवन्तु तस्य का हानिस्तृणभोक्तारो भूतले ॥१९॥

अन्धं दर्शयितुं शक्तो यदि भूमौ न भास्करः ।
का कथा दीपतुल्यानां पण्डितानां सुमेधसाम् ॥२०॥

त्वमिच्छसि च सूर्यस्य ममतामञ्जुलं करम् ।
त्वमिच्छसि विहंगानां काकलिं केलिमञ्जुलाम् ॥२१॥

त्वमिच्छसि चानलस्य प्रियेऽत्र ज्वलनलीलाम् ।
त्वमिच्छसि नवं मेघं चपलां भावविह्वलाम् ॥२२॥

त्वमिच्छसि नवं स्नेहं नवीनां ममतां चलाम् ।
यत्र नास्ति कदा शान्तिस्तत्र सुखस्य चिन्तनम् ॥२३॥

वृथैव सकलो यत्नः केवलं चित्तमन्थनम् ।
मन्थनस्य फलं शून्यं शून्यता दुःखदायिनी ॥२४॥

दुःखस्य दहनं तीव्रं तीव्रता भावनाशिनी ।
भावं विना शिवत्वस्य प्राप्तेः संभावना कुतः ॥२५॥

इयं परम्परा चात्र प्रचलति प्रथा तथा ।
दूर्वे न केवलं भूमावेतादृशी दशा कृशा ॥२६॥

सर्वे प्रपीडिताः सन्ति दुर्जनैर्दुष्टजन्तुभिः ।
इच्छन्ति दुर्मुखा दुःखं तव प्रपीडनं सदा ॥२७॥

विनाशं कामयन्ते ये भूतले तव सर्वदा ।
यद्यपि ते महावृक्षास्तथापि लोभवर्वराः ॥२८॥

इच्छन्ति मङ्गलानि ते तेषां हि केवलं भूमौ ।
परन्तु न भूमिस्तेषां न जलं पवनो न वा ॥२९॥

ते न भाग्यविधातारो जनस्य कस्य भूतले ।
तेषां करे सामान्यास्ति क्षमता या न वै स्थिरा ॥३०॥

तथापि मदमत्तानां विचारा दुःखदायकाः ।
निन्दन्ति नितरां नित्यमनिन्द्यं द्वेषकारणात् ॥३१॥

प्रशंसन्ति सदा निन्द्यं निजसेवापरायणम् ।
दूर्वे दुर्बलतां मुञ्च पश्य दिवाकरं प्रभुम् ॥३२॥

आलोकयति सहर्षं विना क्लान्तिं चराचरम् ।
वहति मधुरो वातो लोकानां सुखहेतवे ॥३३॥

वर्षति भूतले मेघो लोककल्याणकारकः ।
तपति तपनतापैः पादपः शान्तशीतलः ॥३४॥

छायां सुशीतलां दत्वा स्वयं भवति सुन्दरः ।
धरणी सहते दुःखं पश्य नानाविधं सखि ॥३५॥

तथापि कातरा नैव कदापि दृश्यते च सा ।
देहमत्र शुभं कर्तुं लोककल्याणकारकम् ॥३६॥

पातुं विषं समुद्रस्य सर्वेषां मङ्गलाय च ।
संसहन्ते सदा दुःखं सज्जनाः सरलाश्च ये ॥३७॥

अन्धकारस्य नाशाय लोकानां प्रकाशाय च ।
नित्यमिह ज्वलन्ति ते स्नेहसिक्ताः प्रदीपकाः ॥३८॥

अत्रास्ति सागरो दूर्वे तथाचास्ति घटः किल ।
अत्रास्ति च तृणं शुष्कं तथैवास्ति महीरुहः ॥३९॥

अत्रास्ति सुन्दरो हंसस्तथैव चतुरो बकः ।
अत्रास्ति मधुरा मल्ली तथैव तीक्ष्णकण्टकम् ॥४०॥

सुधातुल्यं सुखं चास्ति दुःखं विषमिवाप्रियम् ।
अत्रास्ति पतनं दूर्वे समुत्थानं तथैव च ॥४१॥

अत्रास्ति शारिका सौम्या भीमास्ति कुत्र कालिका ।
संसारे भास्करो भाति ज्वलतीह च दीपिका ॥४२॥

खेलति कलिका कुत्र वाटिकायां विलासिनी ।
पङ्के विनश्यति प्रेममयी च नवपद्मिनी ॥४३॥

रसमयं फलं चास्ति रसहीनोऽत्र प्रस्तरः ।
विचरति वने व्याधो नगरे च निशाचरः ॥४४॥

अत्रास्ति चपलो वातोऽत्रास्ति च स्थिरपर्वतः ।
अत्रास्ति गगनं गन्तुं रन्तुं गर्ते तथैव च ॥४५॥

सन्त्यत्र धेनवः शुभ्रा विचरन्ति च सूकराः ।
लङ्कायामसुराः सन्ति सन्ति च वनवानराः ॥४६॥

अत्रास्ति तमसा दूर्वे ज्योतिरस्ति तथा सखि ।
जाग्रदस्ति तथा स्वप्नस्तथा सुषुप्तिरेव नः ॥४७॥

अस्माकं भारता भूमिः स्वर्गादपि गरीयसी ।
स्वर्गसुखं समाप्नोति नित्यं घने वने ऋषिः ॥४८॥

अत्र कामयते मोक्षं पीत्वा गङ्गाजलं जीवः ।
शिवत्वं च समाप्नोति सदा साधनया जीवः ॥४९॥

परमं सत्यमित्यत्र परमात्मा निगद्यते ।
ब्रह्मणः सुखरूपस्य जीवः स्वरूपमुच्यते ॥५०॥

अस्माकं परमादर्शो यदा धर्मस्तदा जयः ।
आनन्दो ब्रह्मणो रूपं तस्मादत्र कुतो भयम् ॥५१॥

वैदिकी चेतनास्माकं सुमहती विराजते ।
संस्कृतिः संस्कृताश्रिता विश्वेऽस्मिन् परिपूज्यते ॥५२॥

भारतजननी धन्या काले काले समुज्ज्वला ।
वीरप्रसविनी यस्माद्विश्वे सा गौरवान्विता ।।५३।।

अस्मिन्देशे समुत्पन्नो रामो दशरथात्मजः ।
अद्यापि गीयते तस्य गौरवं च भूमौ रजः ।।५४।।

मन्दिराणि विराजन्ते विराजतेऽत्र संस्कृतिः ।
रामायणी कथा कुत्र कुत्र भागवते रतिः ।।५५।।

वैविध्यप्रचुरं किन्तु सूत्रेणैकेन संयुतम् ।
नाना भाषामयं नित्यं विभाति मम भारतम् ।।५६।।

रवीन्द्रकुमारपण्डाकविना विरचितं 'कथं दुर्बलता दूर्वे' काव्यं समाप्तम्

******

## १७.

# तथापि सा नृत्यति नेत्रभूमौ

आलोकनेनैव मनो विनष्टम्
विलोकनेनैव मतिर्विनष्टा ।
स्पर्शेण चित्तच्यवना विनष्टा
तथापि सा नृत्यति नेत्रभूमौ ॥१॥

लोभेन नष्टा सुविचारराशि-
र्मोहेन नष्टाश्च विलासभावाः ।
भोगेन नष्टाः सुखभावनास्ता -
स्तथापि सा नृत्यति नेत्रभूमौ ॥२॥

प्रेम्णः समुद्रेऽपि तृषा विनष्टा
क्षुधा विलुप्ता भोगभावनायाम् ।
नीतिर्विनष्टा च विलासमोहे
तथापि सा नृत्यति नेत्रभूमौ ॥३॥

अङ्के निधाय कथितं समस्तं
विलासवृत्तं विविधैः प्रयत्नैः ।
तवैव दासोऽस्मीति वाक्यमुक्तम्
प्राणप्रिया मे न तथापि तुष्टा ॥४॥

पश्य प्रिये मे हृदयतरङ्गा-
स्ते रङ्गभूमौ भ्रमितुं यतन्ते ।
विलोक्य सर्वां सुविलासचेष्टां
मनोऽनुरागी तव सङ्गमाय ॥५॥

कदा कदा चित्तचकोरमूढो
विभेद्य रात्रिं तमसामयीं ताम् ।
पातुं प्रयासी प्रणयामृतानि
तवाधरस्याकुलकल्पनायाम् ॥६॥

जानामि कामज्वरजातदुःखं
कथं तदेव विवशीकरोति ।
कथं स वह्निस्तृणतुल्यमेव
विचारराशिं दहति सधीरम् ॥७॥

सुधास्ति कान्ते मधुरेऽधरे ते
लावण्यमस्ति प्रचुरं शरीरे ।
तवैव वाक्यं मम चित्तचैत्रः
देहञ्च ते चन्दनपादपोऽस्ति ॥८॥

कण्ठे सदा नृत्यति शारदा ते
तस्मात्त्वमेव प्रियभाषिणीति ।
प्रियं वदन्ती हृदये प्रमोदं
प्रियम्वदे! त्वं सृजसि सहर्षम् ॥९॥

मनो मृगो मे विपिने तवैव
माधुर्यलक्ष्म्याः करुणाभिलाषी ।
आलोकराशिश्च तथापि तत्र
न तारका भाति तव प्रकोष्ठे ॥१०॥

त्वं चन्द्रमास्त्वं मम कामधेनु-
रिच्छानुसारं प्रददाति सौख्यम् ।
सुखं समस्तं हसतीव गेहे
प्रिये सदा ते मुखदर्शनेन ॥११॥

क्रोधेन नष्टा रमणाभिलाषा
तयैव भ्रष्टा रमणीयभावाः ।
अभावदुःखे मम देहवह्निः
संग्रामकामी ज्वलतीह मुग्धे ॥१२॥

मेघेन किं मे यदि नो निदाघः
किं भूषणैर्नात्र यदि वसन्तः ।
स्नेहेन किं मे यदि धूमकेतु-
राकाशगङ्गां विकलीकरोति ॥१३॥

आषाढमासे नवनीरभिक्षा
जलं न शुष्कं सरसी न शुष्का ।
तथापि मीनः कमलं विलोक्य
कलात्मभाष्यं लिखतीव दुःखी ॥१४॥

सुखस्य मार्गो न च कोऽपि बन्धो
न कापि बाधा न च बन्धनानि ।
देहेऽस्ति वह्निर्विपिने वसन्त:
कथं न चित्ते करुणा तवैव ।।१५।।

भावेऽप्यभावस्य कथा विचित्रा
भावस्य भूमौ व्यथनं विचित्रम् ।
व्यथा यदा मोहमदप्रमत्ता
देहस्य भूमौ दहनं विचित्रम् ।।१६।।

रवीन्द्रकुमारपण्डाकविना विरचितं 'तथापि सा नृत्यति नेत्रभूमौ' काव्यं समाप्तम् ।

******

१८.

# प्रिया ममेयम्

सदा प्रसन्ना चरणानुवर्तिनी
सुखेषु दुःखेषु च तुल्यरूपिणी ।
न मोहमुग्धा न च कूटभाषिणी
प्रिया ममेयं मृदुमन्दहासिनी ॥१॥

धनाय मानाय कदा न चञ्चला
रसाय वासाय च सा न विह्वला ।
न भूषणाय प्रबलाभिलाषिणी
प्रिया ममेयं सरला सुहासिनी ॥२॥

सदैव या स्नेहरसेन शीतला
शिरीषपुष्पादपि कोमलाङ्गिनी ।
विना वसन्तं सृजति प्रियंवदा
अनन्तमाधुर्यविशेषमूर्च्छनाम् ॥३॥

सुधामयी सा मधुरा महीतले
सुधाकरात्साप्यधिका मनोहरा ।
मनो हरन्ती हरिणीव चञ्चला
प्रिया च सा तिष्ठति चित्तमण्डले ॥४॥

विशुद्धदेहा यमुनेव भास्वरा
विशालसौभाग्यकलाकलेवरा ।
विधुं स्वरूपेण विनिन्दतीव सा
विराजते या महिला रसोज्ज्वला ॥५॥

सदा ह सीतेव पदानुसारिणी
पतिव्रतानां चरणानुकारिणी ।
सदा विनम्रा प्रमदा मदोन्नता
प्रिया ममेयं रसिका विमोहिता ॥६॥

न याति चित्तं परिहाय तां कदा
लतां लवङ्गीं नवपुष्पमण्डिताम् ।
नवे वसन्ते नवरागधारिणीं
नवीनमोदे सहधर्मचारिणीम् ॥७॥

सरोजनेत्रा प्रणयप्रदीपिका
प्रभावशीला मम काव्यनायिका ।
कलावती सा प्रणयाकुला नदी
विदग्धचित्तवनभूमिभूषणा ॥८॥

कदा कराला च कदा सुहासिनी
समग्रविश्वे विरला विलासिनी ।
विचित्ररूपा प्रतिमा प्रमोदिनी
प्रिया ममेयं सहधर्मिणी वरा ॥९॥

प्रिया रसाला नवरागरञ्जिता
रसेश्वरी रासकलासु कोविदा ।
शुभैः सुहासैर्हरिणेक्षणा हृदं
दिवानिशं मे हरति प्रहर्षिणी ॥१०॥

भ्रमामि नित्यं हृदये निधाय यां
निधिस्वरूपां मम दुःखहारिणीम् ।
सदा समाना न च साभिमानिनी
प्रिया ममेयं विमला सुभाषिणी ॥११॥

गृहे च लक्ष्मीर्बहिरेव मल्लिका
मनस्विनी सा मधुभावमालिका ।
न मोहमात्सर्यमदप्रमोदिनी
प्रिया ममेयं कलिका विनोदिनी ॥१२॥

विभाति नेत्रे रमणीयता सदा
सुखेन तस्या लसतीव मे मनः ।
धनेन किं मे वद वा वनेन किम्
प्रिया ममेयं रमणी रसप्रदा ॥१३॥

हसामि यस्या मधुहासभूषणै-
र्धनीकरोमि प्रणयञ्च सर्वदा ।
अभावे यस्याश्च भवामि भावुकः
कदात्र मूकः पिकसदृशः कदा ॥१४॥

गृहस्य लक्ष्मीरिति कथ्यते च या
गृहस्य लाभाय च लोभसंयुता ।
गृहस्वरूपा गृहिणीति कथ्यते
कदा न मिथ्या विबुधा वदन्ति यत् ॥१५॥

अवारितं वाति वसन्तवातो
गेहे न दुःखे गृहिणी यदि स्यात् ।
न कातरा भीषणदुःखदैन्यै-
र्न चातिदग्धा भवभावदुःखैः ॥१६॥

अर्धाङ्गिनी सा कथयन्ति विज्ञा
नरो न पूर्णश्च विना तयैव ।
नरस्य नारी न हि दुःखबीजं
मन्दाकिनी सा सुखसम्पदस्य ॥१७॥

नरस्य दुःखं सहनेन हर्तुं
करोति कार्यं स्वसुखं विहाय ।
नारी प्रसन्ना यदि गृहलक्ष्मीः
प्रयाति दुःखं सकलं सदैव ॥१८॥

पत्युः समीपे सरला लता सा
कृष्णा कराली च विनाशकाले ।
विनाशनाय महिषासुरस्य
साभूच्च दुर्गा हि विपत्तिकाले ॥१९॥

******

# १६

# हे महाकाल ते सादरं वन्दनम्

हे महाकाल ते सादरं वन्दनं
देहि मां देहि मां ते कृपाचन्दनम् ।
कामये भूतले भूषितं जीवनं
पूरितं पुष्पितं शोभितं काननम् ॥१॥

वासनागह्वरे बन्धनं दुःखदं
कामनाकानने क्रन्दनं दुःखदम् ।
हर्षदं केवलं ते दयाकाञ्चनं
हे महाकाल ते कामये दर्शनम् ॥२॥

कामनाकामिनी मानसोल्लासिनी
प्रेयसी प्रेमदा प्राणसञ्चारिणी ।
वर्धते वेदना व्याधिना मन्दिरे
क्रन्दतीव तथा चन्द्रिका कन्दरे ॥३॥

जीविकारज्जुणा दह्यते जीवनं
प्रीतये प्रान्तरे मुह्यते जीवनम् ।
शोकदं धावनं धूमिले भूतले
जीवनं शोभते नो कदा पङ्किले ॥४॥

दुर्जनैर्मन्दिरं सुन्दरं खण्डितं
जीवनं यन्त्रणायष्टिना दण्डितम् ।
राक्षसैर्मण्डिता सुन्दरी मेदिनी
निर्गता सम्मुखे शान्तिसौदामिनी ॥५॥

सम्मुखे सर्वदा सभ्यताक्रन्दनं
धर्षणं शोषणं ताडनं पीडनम् ।
यन्त्रणाचत्वरे जर्जरं जीवनं
दृश्यते रौरवे कूटकं क्रन्दनम् ॥६॥

फेशनं, व्येसनं, दारणं, मारणं(लौकिकः प्रयोगः)
धर्षणं, मर्षणं, गर्जनं, तर्जनम् ।
धूमिले भूतले रौति नो जीवनं
हे प्रभो! ब्रूहि मां तस्य किं कारणम् ॥७॥

शोषणव्याधिभिः शोषितं जीवनं
दूषणव्याधिभिर्नर्दितं जीवनम् ।
भूषणव्याधिभिः लुण्ठितं जीवनं
भाषणव्याधिभिः कुण्ठितं जीवनम् ॥८॥

यातनापिञ्जरे पीडितं जीवनं
वासनासागरे ताडितं जीवनम् ।
व्याकुले मानसे मोहदं चिन्तनं
चिन्तनैर्दूषितं सुन्दरं जीवनम् ॥९॥

हे प्रभो! त्वं हि मे चेतनामन्दिरं
देहि मां देहि मां ते कृपाचन्दनम् ।
यातु मे यातना ते दयावारिदै-
र्वर्धतां प्राङ्गणे ते कृपापादपः ॥१०॥

रवीन्द्रकुमारपण्डाकविना विरचितं महाकाल
दशकम् समाप्तम् ।



२०

# कुक्कुराः

शनैः शनैर्विनश्यति विशालविश्ववैभवम् ।
सुखेन किन्तु पश्यति नराधमः पशुव्रती ॥१॥

हिताहितं न पश्यति न पश्यतीह दूषणम् ।
धनाय धूमपङ्किले प्रधावतीव वानरः ॥२॥

न वैदिके कदा मनो न यौगिके कदा धनम् ।
रमायणाय जीवनं ददाति मोहपूर्वकम् ॥३॥

धनं विना न कोपि हे मुखं तवैव पश्यति ।
धनाय रूपकाननं महासती प्रधावति ॥४॥

धनेन कर्म सिध्यति जनैश्च कर्म सिध्यति ।
न विज्ञता, न सभ्यता कलौ फलप्रदास्ति नः ॥५॥

न योग्यतात्र शोभते न साधुता विचार्यते ।
भ्रमन्ति यत्र कुक्कुराः प्रशासनाय भूतले ॥६॥

करोमि कुत्र रोदनं कथं करोमि गर्जनम् ।
न यत्र शान्तिचन्दनं न वा सुनीतिबन्धनम् ॥७॥

किमत्र काव्यपाठनैः किमत्र शास्त्रमन्थनैः ।
किमत्र दोषदर्शनैः किमत्र भावबन्धनैः ॥८॥

न मित्रता न सभ्यता न यस्य शुद्धभावना ।
सदैव तस्य पूजने किमत्र लभ्यमस्ति मे ॥९॥

अतो भजामि भास्करं धनान्धकारकन्दरे ।
स्वदेहदीपदर्शने विभातु स विभाकरः ॥१०॥

******

sah
25

## Books - Original / Edited

1. Anandabodha Yati : Life and Philosophy, Eastern Book Linkers, Delhi, 1997.
2. Suvrttatilaka of Ksemendra : (Edited), Paramamitra Prakashan, Delhi, 1998.
3. Research in Indology : A New Perspective (Edited), Bharatiya Kala Prakashan, Delhi, 1998.
4. Kumarasambhavam (5 th Canto)(Edited With Text & English Translation), Bharatiyakala Prakashan, Delhi, 1998.
5. Manusmriti (II & III Chapters) Edited with Text & English Translation, Paramamitra Prakashan, Delhi, 1999.
6. Studies in Sanskrit Sastras, Paramamitra Prakashan, 2000.
7. A Survey of Post-Sankara Advaita Vedanta, Edited, Paramamitra Prakashan, Delhi, 2000.
8. Vanavalli (A Collection of Poems in Sanskrit), Lions Club of Lalbaug, Baroda, 1996.
9. Pratidhvani, (A Collection of Poems in Sanskrit), Utkala Sahitya Samaja, Allahabad, 1996.
10. Urvee (A Collection of Poems in Sanskrit), Paramamitra Prakashan, Delhi, 1998.
11. Niravajhara (A Collection of Poems in Sanskrit), Paramamitra Prakashan, Delhi, 1998.
12. Satadalam (A Collection of Poems in Sanskrit), Paramamitra Prakashan, Delhi, 2002.
13. Studies in Vedanta Philosophy, Bharatiya Kala Prakasan, Delhi, 2002.
14. Bhaminivilasa, Text with English translation and Sanskrit commentary, Edited, Bharatiya Kala Prakashan, Delhi, 2004.
15. Chhinnachhaya, Arvachina Sanskrit Sahitya Parishad, Baroda, 2005.
16. Balaka, Arvachina Sanskrit Sahitya Parishad, Baroda, 2006.
17. Kavyakairavam, Arvachina Sanskrit Sahitya Parishad, Baroda, 2007.